# दानवाक्यावलीयम्



श्रीलब्धमानिर्मिता

श्रीमत्पण्डितपर्णा शर्मणासंशोधिता

सं० १९४० ज्यै० शु० ५

शा० १८०५

श्रीवाराणस्यां विक्टोरियायन्त्रालये दिग्गुदत्त

शर्मणा ऐंड कम्पनी मुद्रितम्

दशाश्वमेध घाट ।

PINTED AT VICTORIA PRE

BENARES

॥ श्रीं ॥

## ॥ श्रीविश्वेश्वरी विजयतेतराम् ॥

श्रीमज्ज्ञानन्दसिद्धौ नयविनयभरभ्राजमानो नरेन्द्रो
यस्यास्सुगुणौघैर्जगति विजयते पार्वतीनामिका या।
रामाख्या वनैल्या फणिधरविदुषा पालितनाम्न
सोमैः सुद्रावर्णैः प्रकाशमुपनयतुगमिता दानवाक्यावली
यम्॥ यावत्सुरतरङ्गिणी हरजटा जूटान्तमालम्बते
यावद्विश्व विकाशविस्तृतकरश्चर्यो यमुज्जृम्भते याव
च्चां विधुमण्डलं वितनुते शम्भोः शिरोमण्डले तावल्ली
लिंखतेयमस्तुमफगाद्व्याख्या ताम्रेयसे ॥ २ ॥

---

अथ श्रीमन्मिथिलादेशालंकारभूतया श्रीमन्मैथिल
जातिख्यातसुगुणगणया मैथिलकुलपताकया सकल
सद्विवेकवत्या धीरमत्युपनामिकया श्रीलक्ष्मया
नाम विरचितेयन्दान वाक्यावली मिथिलान्तर्गत
सतलखाग्रामनिवासिना श्रीमद्गौरीमिश्रात्मजेन वनै
लीराजधानी स्वामिन्या श्रीपार्वत्याख्याया राज्ञ्या
कृपापात्रेण मिश्रोपनामकेन श्रीमत्पण्डितफणि
मर्मेया संशोध्य प्रकाशिता पश्यन्तां सुहृदयाः सुधिय
इत्यलम्

# ॥ दानवाक्यावली ॥

॥ ॐनमोमहागणेशाय ॥

वन्देमुकुन्दस्य पदार विन्दं वन्दारुवृन्दारक
वृन्दवन्द्यम्। मन्दाकिनीयन्मकरन्दविन्दुवृन्दो
ऽस्य सन्देहविबन्दधाति॥ त्रैलोक्याधिपतेः पद
त्रयभुवदैत्याधिपं याचतोदत्तासत्वमयेनयेनवसु-
धामेवाग्रतोगच्छत देवार्थेवलिनंवलिच्छलयतोप्य
स्मैहरेस्तुष्यत. स्वाराज्यप्रतिभूर्भविष्णु सपदि
स्वस्यच्छरंपातुवः॥ श्रीरामेश्वरराजपरिवृत्तकुला
लंकारसार श्रियामावासोनरसिंहदेवमिथिला
भूमण्डलाखण्डलः। दृप्यद्दुर्द्धरवैरिदर्पदलनोभू
द्दर्पनारायणोविख्यातः शरदिन्दुकुन्दधवलाभ्या
म्पद्यशोमण्डलः॥ तस्योदारगुणाश्रयस्यमि
थिलाक्ष्मापालचूडामणेः श्रीमद्धीरमतिः प्रि

याविजयतेभूमण्डलमलङ्कृति । दानैकल्पलते
ववारयचरितैया यन्त्रतोयस्मिराघालक्ष्मीरिवभै
रवेगुणगणेगौरीश्चयागणारते ॥ वापीकूपजला
धिकाधिविमला श्रीस्नानवापीसमारव्यं तीर्थनि
वासिवासभवनं चन्द्राभमभ्र लिहम् ॥ उद्या
नफलपुष्पनम्रविटपच्छायाभिरानन्दनभिद,
ध्य यरसान्द्रदान मण्डपस्रामवान्याद्रुक् ।
लक्ष्मीभाज कृतार्थीनकृतसुमनसोयामस्मादा
नहैमग्रामैराजीव राजीवच्छलतरपरागाप्तरागै
स्तडागै ॥ विद्वत्सङ्घाप्य विद्यापतिमतिकृतिन
सप्रकाशाक्षुदाराराजश्रीपुण्यादलोकाविरचयति
नशादानवाक्यावलीसा ॥ तत्रादौ दानप्रशंसा ॥
तत्र महाभारते। यानीमान्युत्तमानीह वेदोक्ता
नि प्रशंसिः। तेषांश्रेष्ठतमं दानमितिमे नास्तिसं
शय.॥ विष्णुधर्म्मोत्तरे। दानदेश प्रशंसन्तिसनु
ष्यास्तथाद्विजाः। दानेनकामानाप्नोतियान् का
श्चित्मनसेच्छति॥ नन्दिपुराणे। नदानेनविनाकि
चित्रैलोक्येसम्पद्यते । अपिशास्त्रागमाभ्यसनात्

भोनैवेह विद्यते ॥ अदानशालिनां पुंसां तस्माद्दा
नं समाश्रयेत् ॥ दानव्यासः । यद्ददासि विशिष्टेभ्यो
यच्चाश्नासि दिने दिने । तत्ते वित्तमहं मन्ये शेषं क
स्यापि रक्षसि ॥ आयासशतलब्धस्य प्राणेभ्योपि
गरीयसः ॥ गतिरेकैव वित्तस्य दानमन्या विपत्त
यः ॥ वृहस्पतिः ॥ द्वारेवास्य प्रवेष्टव्यौ गलेवद्ध्वा
दृढां शिलां ॥ धनवंतमदातारं दरिद्रं चातप
स्विनं ॥ व्यासः ॥ ग्रासादर्द्धमपि ग्रासमर्थिभ्यः
किन्न दीयते ॥ इच्छानुरूपो विभवः कदा केन भ
विष्यति ॥ याज्ञवल्क्यः ॥ अहन्यहनि याचत्स
हं मन्ये गुरुं यथा ॥ मार्जनं दर्पणस्येव कुरी
त दिने दिने ॥ महाभारते ॥ अद्भिर्गात्राक्षालसि
वतमोऽध्वनि भयाद्यथा ॥ दानेन तपसा चैव सर्वं
पापमपोह्यते ॥ कृतेन शाम्यते पापस्याध्या
यैव्यान्निवर्त्तमा ॥ दानेन भोगाइत्याकुस्तपसा
सर्वमाप्यते ॥ मनुः ॥ कृते तपः प्रशंसन्ति त्रेतायां
ज्ञानमुत्तमं ॥ द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥
यमः ॥ यतीनां परमो धर्मः स्वनाहारो वनौक

सा ॥ दानमेवगृहस्थानामाश्रमाब्रह्मचारिणां ॥ व्यासः ॥ जीवितेयस्यजीवंतिविप्रामित्राणिबान्धवा ॥ सफलंजीवितंयस्यात्मार्थेकोनजीवति ॥ विष्णुधर्म्मोत्तरे ॥ अदत्तदानानृपपशान् दृष्ट्वैवपरतर्कुकान् ॥ पार्थिवकनिर्विंकुर्य्याद्दानविप्रेषुमानव कृपणान्• विकलान्•परतर्कुकान्•प्रार्थनशीलान्•देशेकालेतथापात्रेधनंन्यायागततथा ॥ बहुत्वंप्राप्नुवन्त्येतास्तदनतप्रकीर्त्तित । मत्स्यपुराणे ॥न्यायेनार्ज्जनमर्थस्यवर्द्धनंचाभिरक्षणंसत्पात्रेप्रतिपत्तिश्चसर्वशास्त्रेषुगीयते॥ अथदानस्वरूप ॥ तत्रदेवलः ॥ अर्थानामुदितेपात्रेश्रद्धयाप्रतिपादनं ॥ दानमित्यभिनिर्द्दिष्टं व्याख्यानंतस्यवक्ष्यते ॥ उदितेशास्त्रकथिते•पात्रेभ्योदीयतेनित्यमनपेक्ष्यप्रयोजन ॥ केवलधर्म्मबुध्यायद्धर्म्मदानंतदुच्यते ॥ दाताप्रतिग्रहीताचश्रद्धादेयंचधर्म्मयुक् ॥ देशकालौचदानानामङ्गान्येतानिषड्विदुः ॥ अर्म्मयुग्देयन्यायार्जितद्रव्यम्•अपापरोगीधर्म्मात्मादित्सुरव्यसन शुचि ॥

कात्यायन ॰ सर्व्वस्वं गृहवर्ज्जं तु कुटुम्बभरणाधिकम्।
यद्द्रव्यं तत्‌ कदेयमदेयमन्यत्ततोन्यथा ॥ तथा॰
परिभुक्तमविज्ञातमपर्य्याप्तमसत्कृतं ॥ यत्प्रयच्छति
विप्रेभ्य. तद्धर्मन्यवतिष्ठते ॥ परिभुक्तं गृहीतोप
योगवस्त्रादि ॰ अप्रख्यातमनादृतम्‌ ॥ अपर्य्या
प्तम्‌। अशार्य्याजनमतिजीर्णं पुरगादि ॰ असंस्कृ
तं आरजिरम्भात्‌ आर्य्यायोग्यमासनादि ॰ दे
वल ॥ मत्स्यफलदाम श्रद्धयापरिवर्जितम्‌ ॥
परपीडाकर दानंपरमप्युन्नताद्व्रजेत्‌ ॥ परपीडा
करम्‌ ॥ कुटुम्बपीडाकरम्‌ ॰ याज्ञवल्क्य ॥
दातव्यं प्रत्यहपात्रे निमित्तेषु विशेषत ॥ याचिते
नापिदातव्यं श्रद्धापुततुशक्तित ॥ अथ दानका
ल ॥ तत्रशातातप ॥ अयनादौसदादेवं द्रव्य
मिष्टं गृहेषुयत्‌ ॥ षडशीतिमुखेचैवविमोचे
चन्द्रसूर्ययो ॥ संक्रान्त्यामिदत्तानिहव्यानक
यानिदातृभि. ॥ तानिनित्यं ददात्यर्कं पुनर्ज
न्मनिजन्मनि ॥ शतमिन्दुक्षयेदत्तं सहस्रं तुदि
नक्षये ॥ विषुवेशतसाहस्रं व्यतीपातेत्वनन्त

कम् ॥ अयनेषुचयद्दत्तंषडशीतिमुखेषुच ॥ चन्द्रसूर्य्योपरागेचदत्तंभवतिचाक्षयं ॥ विष्णुध र्म्मोत्तरे ॥ द्वादशीषुचयद्दत्तंशुक्लासुचविशेष तः ॥ श्रवणेनचयुक्तासुतथापिद्विजसत्तमा ॥ त्रिशेषाद्युयुक्तासुगच्छान्तेषुचवत्तथा॥ तृतीया सुचसर्व्वासुशुक्लासुचविशेषतः आषाढेकार्त्तिके चैत्रफाल्गुनेचविशेषत ॥ तिथ्यन्तेता. पौर्णमा स्योदाने शस्तामहाफलाः॥ व्यतीपातेषुयद्दत्तंज न्मर्क्षेचद्विजोत्तमा ॥ ग्रहसंक्रमकालेचतोच्छ्रा र्क्षेर्विशेषत ॥ तुलामेषप्रवेशेचत्यागेवृमिथु नस्यच ॥ रवेर्म्महाफलंदत्तंतेभ्योपिसगान्मह। फलम् ॥ यदाप्रविशतेभानुर्मकरंद्विजसत्तमाः आषाढेश्वयुजेपौषेचैत्रेशुक्लेतथैवच ॥ द्वादशीप्र स्तिप्रोक्तंपुण्यंदिनचतुष्टय ॥ मिथुनंचतथाक न्यांधन्विनमीनमेवच ॥ प्रविष्टेभास्करेपुण्यप्र त्येकंभास्करद्विजा ॥ षडशीतिमुखनामदाने दिनचतुष्टयम् ॥ अच्छिन्ननाडीयदृत्तंपुत्रेजा तेद्विजोत्तमा ॥ युगादिषुपरागेषुतथामन्वत

रादिषु ॥ संक्रान्तौ वैधृतदिने चतुर्दश्यष्टमीषु
च ॥ यज्ञोत्सवविवाहेषु तथा ग्रहणदर्शने ॥ द्रव्य
ब्राह्मणलाभे च श्रद्धा वा यत्र जायते ॥ अक्षयत्वं च
वदामि ॥ तत्र शङ्खलिखितौ । देश काल उपायो द्र
व्यं श्रद्धा पात्रं त्याग इति समस्तेषु । धर्म्मोदय. साधा
रणो ऽन्यथा विपरीतः श्रद्धापात्रसम्पन्नो धर्म्मः. का
लापेक्ष श्रद्धाद्रव्योत्पत्तिरिति कालस्तन्मूलो देशः
देशः आर्य्यावर्त्तादि काल संक्रान्त्यादि उपाय इ
ति कर्त्तव्यता । जपहोमादि । श्रद्धा आस्तिक्यं तत्प्र
तिप्रत्यय ॥ पात्रं विद्यातपोवृत्तसम्पन्नं त्यागो ब्रा
ह्मणेभ्यः उत्सर्गः । समस्तेषु सर्वेषु सत्सु । धर्म्मो
दयो धर्म्मोत्पादः साधारणः सर्वेषु सत्सु भवति भ
वति चैकेनापि विना । एवञ्च देशादीनामपि सा
मर्थ्यं प्रत्येकं कारणत्वमुक्तं ॥ अन्यथा देशादी
नामन्यतमाभावे विपरीतो धर्म्मः स्यादित्यो वैसुध्य
स्वा ॥ विशेषविहितदेशकालविशेषं विनापि
श्रद्धापात्रविशेषसम्पत्तिमात्रेणापि विशिष्ट धर्म्मं सि
द्धिमाह । श्रद्धापात्रसम्पन्नो धर्म्मः कालापेक्ष ॥

ब्रह्मपार्थविशेषा श्चाश्चिवत्तावस्थ पदतमेवर्च्छः ॥
वद्दिकाकोलभ्यते कोसावितिचेत्तदाह॰ श्रद्धा
द्रव्योत्पत्तिरितिकालः ॥ श्रद्धापात्रसम्पत्तौयदा
द्रव्यंस्यात्सएवकालो विशिष्टधर्म्मंहेतुर्नोपरोवि
षुवादिरपेक्षणीय ॥ एवंदेशोपिव्याह ॥ तन्मू
लोदेश. ॥ श्रद्धादिसम्पत्तिरेवमूलमाश्रिकारणं
यस्यसतथोक्तः ॥ अथपुण्यदेश विष्णु पुराणे ॥
उत्तरयत्समुद्रस्यहिमाद्रेश्च दक्षिणं । वर्षंतद्भा
रतंनामभारतीयत्रसंतति. ॥ नवयोजनसाह
स्र.विस्तारोस्यमहामुने ॥ कर्म्मभूमिरियंस्वर्गं
मपवर्गंचगच्छतां ॥ मनु. ॥ सरस्वतीदृषद्वत्योर्द्दे
वनद्योर्यदन्तरं ॥ तद्देवनिर्म्मितंदेशंब्रह्मावर्त्तंप्र
चक्षते ॥ कुरुक्षेत्रंचमत्स्याश्चपञ्चालाः सुरसे
नका. ॥ एषब्रह्मर्षिदेशोवैब्रह्मावर्त्तादनंतरः ॥
हिमवत्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि ॥
प्रत्यगेवप्रयागाच्चमध्यदेश. प्रकीर्त्तितः ॥ आ
समुद्रात्तु पूर्वादासमुद्रात्तुपश्चिमात् तयोरेवान्त
रंगिर्योरार्य्यावर्त्तंप्रचक्षते ॥ कृष्णसारस्तुचर

तिमृगगोयत्रस्वभावत.॥ सत्नयोयस्मियोदेशोब्लेच्छदेश ततपर ॥ मत्स्या ॥ विराटदेश पश्वाला कान्यकुब्जादिकश्चादिदेश स्सेन य मथुरादिदेश ॥ विनसनसरस्वत्यं तर्द्धानदेश ॥ तयो हिमवद्विन्ध्ययो स्वभावतोन बलात्कारेणयस्मिये यस्मिय ॥ भविष्यपुराणे ॥ ब्रह्मावर्त. परोदेशब्रह्मर्षिदेशस्त्वनतर ॥ मध्यदेशस्ततोन्यूनश्चार्य्यावर्त्तस्त्वनंतर ॥ पर युगतम ॥ ग्रनन्तरहपन्ह्यन ॥ अत्त्व गायबागिरितिटर्दोपदर्थेनज ॥ विष्णु ॥ चातुर्वर्ण्य वावस्थानयस्मिन्देशेनविद्यते ॥ तम्लेच्छदेशज्ञेयादार्यावर्तस्त पर ॥ मरीचि ॥ सिन्धोश्चकरतेयायाहिमवद्विंध्ययोस्तय ॥ पोदेशो मध्यभागेमाद यावर्तंसउच्यते ॥ तदितंम शस्तपर ० परमार्थस्तुविष्णुत्त ॥ बौधाय न ॥ आनर्तकाश्मगधा सुराष्ट्रदक्षिणाप थ ॥ उपाष्टत्सिंधुसौवीराएतेसंकीर्णयोजय ॥ आनर्तक द्वारकाप्रदेश । मगध राजगृह

आर्य्यदेशं सुराष्ट्रं श्रीसोमनाथलक्षितोदेश
सङ्कीर्णयोनयः आर्य्यम्लेच्छोत्पत्तिहेतवएतेनग्यू
नधर्म्मत्वमुक्तम् ॥ म्लेच्छदेशस्तुदानादौसर्वथा
हेय ॥ तथाचआयपुराणे ॥ कारस्कारा कलि
ङ्गाश्चसिन्धोरुत्तरमेवच ॥ प्रनष्टाश्रमधर्म्माश्च
देशावर्ज्याः प्रयत्नत ॥ शङ्ख ॥ म्लेच्छदेशेत
थारात्रौसंध्ययोश्चविशेषत नश्राद्धमाचरेत्प्राज्ञो
म्लेच्छदेशंनचव्रजेत् ॥ श्राद्धमित्युपलक्षण ॥
मत्स्यपुराणे ॥ तीर्थेचायतनेगोष्ठे कूपारामसरि
त्सुच ॥ गृहेऽपिवनेऽपितडागेर्दचिरेतथा ॥ म
ह्यादनानिदेयानिसंसारभयभीरुणा ॥ तीर्थेप्र
यागादौ • आयतनेसूर्य्यायतनादौ ॥ आरा
मेगृहआटिकायाम् ॥ वनेकामनादौ ॥ विष्णु ॥
गोमयेनोपलिप्तेपमनोज्ञेपगृहेपच ॥ कृत्वा
तीर्थान्यभिधाय • मत्स्यपुराणे ॥ एतेपुरुषे
देवानांसान्निध्यपठ्यतेयत ॥ दानमेतेषुसर्वे
षुभवेत्कोटिगुणाधिकम् ॥ भविष्यपुराणे ॥ सर्वे
सूर्य्यासमा.पुण्य.सर्वानद्यस्सपर्वता ॥ गोसि

ह मुनिशार्दूलदेशा पुण्या प्रकीर्तिता ॥ स्व

र्यायतनसमानायदल्पमपिदीयते ॥ तद्गतफ

लमक्षयस्सूर्य्यस्यमानुभावत ॥ लिङ्गपुराणे ॥

अर्द्धक्रोशंशिवक्षेत्रं शिवलिंगात्समंतत स्वय

म्भूतस्यप्रमाणञ्चतथावाणस्यसुव्रता ॥ स्वायम्भु

वेतदर्द्धंस्यात्तत्वेप्रमानहिजोत्तमा ॥ शिवक्षे

त्रसमीपस्थानच सर्वाहिजोत्तमा. ॥ वापीकूपत

डागाद्यशिवतीर्थाइतिस्मृता. ॥ अथदानवि

धि ॥ तत्रापस्तम्ब. ॥ देशत.कालत शौचत

सम्यक्प्रतिग्रहीत्टत इतिदानानिप्रतिपादय

ति ॥ देशतोगंगादौ ॥ कालतोग्रहणादौ •

शौचत स्नानादिनाशुद्धो ॥ प्रतिग्रहीत्टत. ए

कगुणोपात्रे सम्यक्प्रतिपादयति ॥ शास्त्रोक्तवि

धिनादद्यादित्यर्थः ॥ मनु. ॥ योर्चितप्रति

गृह्णातिददात्यर्चितमेवच ॥ तावुभौगच्छतःस्वर्गं

नरकंतुविपर्यये ॥ गद्यव्यास ॥ गोभूतिलहि

रण्याश्ववासोन्नतादिन्यायगतंदेयद्रव्यं श्रद्धा

समन्वितः शक्तितोदद्यात्तुयः शीलादिसंपन्ना

यथाब्राह्मणाद्यानुपकारिणोसम्मानादिभिरर्चितायख्यस्तिवाच्योदकपूर्व्वं दद्यात् ॥ आपस्तम्ब ॥ सर्व्वाण्युदकपूर्व्वाणि॥यथाश्रुति विहारे॥विहारे यज्ञे ॥ अन्वाहार्यदानादौ ० यथाश्रुति ० यावद्वेद श्रूयते तावत्कुर्य्यादुदकपूर्वकतादिनियम इति ॥ हारीत. ॥ तस्मादद्भिरवेक्ष्य दद्याद्दाननिश्च ॥ अवेक्ष्य ० प्रोक्षणंकृत्वा ॥ आत्मद्रव्यसोदकेनपाणिनास्पृष्ट्वा ॥ विष्णु ॥ सर्वे ॥ द्रव्यस्यनामगृह्णीयाद्ददानीतितथा वदेत् ॥ तोयन्दद्यात्तथादातादानेविधिरयस्मृत ॥ गौतम ॥ अलङ्कारानुकरंकृत्वासकुश सातिलोदकम् ॥ फलंसमभिसंधायप्रदद्याच्च श्रद्धयान्वितः ॥ व्यासादिमते ० नामगोत्रे समुच्चार्यप्रदद्याच्छ्रद्धयान्वित ॥ परितुष्टेनभावेनतुभ्यंसम्प्रददेइति ॥ स्मृतिः॥नामगोत्रे समुच्चार्येप्राङ्मुखोदेयकीर्त्तनात् ॥ उदङ्मुखायविप्रायदत्वान्ते स्वस्तिवाचयेत् ॥ व्यास. ॥ श्रद्धायुक्तः शुचिर्दान्तोदानंदद्यात्सदक्षिणं ॥ अ

दक्षिणान्तुयद्दानंतत्सर्वंनिष्फलंभवेत् ॥ दक्षि
णाभिरुपेतंहिकर्म्मसिद्ध्यतिसम्भवे ॥ सुवर्णमे
वसर्व्वासुदक्षिणासुविधीयते ॥ सर्वपदमत्रवि
शेषविधानाद न्यत्रोपरं ॥ अथद्रव्यदैवता
नि ॥ विज्ञानेश्वरोक्तिः ॥ अभयंसर्वदैवत्यं भूमिर्वै
विष्णुदेवता ॥ कन्यादासस्तथादासीप्राजापत्या
 ... ॥ प्राजापत्यो गजः प्रोक्तस्तुरगोयम
दैवतः ॥ तथाचैकशफंसर्वंकथितंयमदैवतं
 ... तथाचोष्ट्रोऽपिनैर्ऋतोभवेत् ॥
 ... दैनिर्दिष्टाछागस्त्वाग्नेयउच्यते ॥ मे
 ... वारुणो ... वैष्णवः स्मृतः ॥ आर
 ... वायुदैवता ॥ जलाशया
निसर्वाणि ... वारुणानि ... ॥ कुम्भञ्चकरक
 ... वारुणानिविनिर्दिशेत् ॥ समुद्रजानिर
त्नानिसामुद्राणितथैवच ॥ आग्नेयंकनकंप्रो
क्तंसर्वलोहानिवाप्यथ ॥ प्राजापत्यानिसस्या
निपक्वान्नमपिचद्विजाः ॥ ... यानिसर्वगंधा
निगांधर्व्वाणिविचक्षणैः ॥ वार्हस्पत्यंस्मृतंवा

स.सौम्यान्यथरसानिच ॥ पश्चिमायस्तथासर्वे वायव्या परिकीर्त्तिता. ॥ विद्याब्राह्मीविनिर्द्दिष्टाविद्योपकरणानिच ॥ सारस्वतानि ज्ञेयानिपुस्तकादीनिपण्डितै ॥ सर्वेषामिल्पभाण्डानाविश्वकर्म्मातुदैवतम् ॥ द्रुमाणामथपुष्पाणाशाकानाहरितेस्तथा ॥ फलानामपिसर्वेषातथाज्ञेयोवनस्पति ॥ मत्स्यमासेविनिर्द्दिष्टे प्राजापत्येतथैवच ॥ छत्रकृष्णाजिनशय्यारथमासनमेवच ॥ उपानहौतथायानयच्चान्यत्प्राणवर्ज्जितम् ॥ उत्तानाङ्गिरसेत्वेतद्गृह्णीतमानव. ॥ पर्ज्जन्यायतथासीरशकटवर्ष्मध्वजादिकम् ॥ रणोपकरणसर्वकथितंशक्रदैवतम् ॥ गृह्णन्तुसर्व्वदैवत्यंयदनुक्तंद्विजोत्तम ॥ तज्ज्ञेयविष्णुदैवत्यंसर्वस्वाविष्णुदैवतं ॥ तदेतद्देवतानायथायथममुकदैवतमितिद्रव्यविशेषणत्वेनदानवाक्येअभिधानमाचारात् ॥ अथप्रतिग्रहविधि. ॥ तत्रहारीत. प्रतिग्रहायाग्नेयेनप्रतिगृह्णीयात् ॥ आग्नेयतीर्थम् ॥ मध्यमा

म्नेयमिति ० हारीतेनोक्तम् ॥ मत्स्य कर्म
ध्यं ॥ विष्णुधर्म्मोत्तरे ॥ भूमि'प्रतिग्रहंकुर्य्या
द्भूमिकृत्वाप्रदक्षिणम् ॥ करेगृह्यतथाक
न्यादासदास्योर्द्विजोत्तमा ॥ करन्तुहृदिवि
न्यस्यधर्म्मोज्ञेय प्रतिग्रह ॥ आरुह्यचगज
स्योक्त कर्णेचाश्वस्यकीर्त्तित ॥ तथाचैकश
फानान्तुसर्वेषामविशेषत ॥ प्रतिगृह्णीतगा
पुच्छेपुच्छेकृष्णाजिनन्तथा ॥ आरण्या पशव
श्चान्येग्राह्या पुच्छेवचक्षणे ॥ प्रतिग्रहमथो
ष्ट्रस्य आरुह्यचतथाभवेत् ॥ वीजानांस्वस्तिमा
दायरत्नान्यादायसर्वत ॥ वस्त्र दशान्तादादद्या
त्परिधायतथापुन ॥ आरुह्यो पानहौयानमा
रुह्यैवचपादुके ॥ ईशायान्तुरथगृह्यछत्र दं
डेचधारयेत् ॥ आयुधानिसमादायतथायुध्य
विभूषणाम् ॥ वर्म्मध्वजौतथास्पृष्टाप्रविश्यचत
थागृहम् ॥ अवतीर्य्यचसर्वाणिजनस्थानानिवैद्वि
जा. ॥ द्रव्याण्यन्यान्यथादायस्पृष्ट्वावाब्राह्मणा.
पठेत ॥ तथासमाप्यत्मशाल्काम स्तुत्वाप्र

तिग्रहम्॥ विधिं धर्म्म्यमथज्ञात्वायस्तु कुर्य्यात्प्रति
ग्रह॥ दातासहतरत्येवनौवद्द्रुग्गीयसौद्विज.॥
तदेतेषावाक्या नाथर्य्यालो चनेनय थादानग्रह
णविधिक्रमस्तथाप्रयोगएवस्फुटोभविष्यति ॥
द्रव्यपूजावाक्यं चतत्तत्पदप्रच्छेप. ॥ पवित्रपा
णित्वभवनादि द्रव्याभिषेकपर्य्यन्त स्वस्तिवाचनं
दक्षिणादान ० तदुत्तरं स्वस्तिवाचनञ्चसर्वं
दानसाधारणप्रतिग्र हीतुर्देय स्पर्शादिविनि
योगप्रकारा दानविशेष विहि तेतिकर्त्त व्यता
स्तत्तत्प्रयोगएवविविच्यलिखनीया: ॥ अथ
प्रयोगोलिख्यते॥ तत्रादौहिरण्यदाने ॥ दा
नबृहस्पति: ॥ गृहादिकेपुण्यफलभवेद्वित्ता
नुसारत: ॥ तस्मात्सर्वप्रदानानाहिरण्यमधि
कस्मृतम्॥ व्यास:॥ सुवर्णपरमंदानंसुवर्णं
दक्षिणापरा सर्वेषामेवदानाना सुवर्ण दक्षिणो
च्यते ॥ मनु ॥ दीर्घमायुर्हिरण्यद प्राप्नो
तीतिशेष ॥ तत्रविधि:॥ दातास्नात शुचि.
शुक्ल द्विवासा. पवित्रपाणिराचान्त शुचिदेशे

प्राङ्मुखः शुद्धासनोपविष्टोन्तर्जानुकरद्वयउप
वीतोब्राह्मणदर्भपाणिमुदङ्मुखन्तत्रोपवेश्य॥
पुष्पाणयाद'यहिरण्यायनमइति ॥ देयब्राह्मणा
यनमइतिब्राह्मणंसम्पूज्य ० इदंहिरण्यन्ददानी
तिद्विजकरेजलदानम्॥ वारिणादेयद्रव्याभिषे
चनंकृत्वा ० दक्षिणपाणिना कुशत्रयतिलजला
न्यादाय ॥ अद्यदीर्घायुष्प्राप्ति कामइदंहिर
ण्यमग्निदैवतममुकगोत्रायामुकशर्म्मणेब्राह्मणा
यतुभ्यमहं सम्प्रददे॥ इति ब्राह्मण दक्षिणकर
मध्ये प्रददेत्॥ ओं स्वस्तीति प्रतिवचनम्॥ त
तः कुशत्रय तिलजला न्यादाय० अद्यकृतैतद्धि
रण्यदानप्रतिष्ठार्थं मिदंहिरण्यमग्निदैवतममु
कगोत्राया मुकशर्म्मणेब्राह्मणाय दक्षिणां तु
भ्यमहंसंप्रददे॥ इतिदक्षिणान्दद्यात्॥ तत.
प्रतिग्रहीता स्वस्तीत्युक्त्वाहिरण्यस्पृशेत्॥ तत
ओं कोदात्कस्माअदात्कामोदात्कामायादात्क
मोदाताकामः प्रतिग्रहीताकामैतत्ते ॥ इति
कामस्तुतिवाजसनेयिद्विजःपठेत् ॥ छन्दोग

स्तु ॥ ओँकइदंकस्माअदात् कामः कामाया दात् कामोदाताकामः प्रतिग्रहीताकामः स मुद्रमाविशत् ॥ कामेनत्वाप्रतिगृह्णामिकामै तत्ते ॥ इतियथाशाखंकामस्तुतिपठेत् ॥ वक्ष्य माणदानेष्वेषएवविधिर्व्वोद्धव्य. ॥ अथसर्व्वत्रौ क्तहिरण्यदाने ॥ हिरण्यदोमहाबुद्धिं दीर्घ मायुश्चविन्दति ॥ हिरण्यपूजांविधाय० अ द्यमहाबुद्धि दीर्घायुष्ट्व प्राप्तिकामइदंहिरण्यम ग्निदैवतममुकगोत्रायेत्यादि० दक्षिणादेयसर्म्पा न्तम् ॥ यमोक्तहिरण्यदाने ॥ रुक्मद.श्रियमा प्नोति ॥ सर्व्वं पुत्रधनादिवाञ्छितमित्यर्थ. ॥ पूजा दिविधाय० अद्यामुकफलप्राप्तिकाम इदंहिर ण्यमग्निदैवतममुकगोत्रायेत्यादि ० दक्षिणाहि रण्यसम्पान्त ० कूर्म्मपुराणीय हिरण्यदाने ॥ हिरण्यगोप्रदानेन निरहंकारमाप्नुयात् ॥ नि रहंकारः स्वर्गभेदः पूजादिविधाय०अद्यनिरहं कार स्वर्गप्राप्तिकाम इदहिरण्यमग्निदैवतमि त्यादि ०दक्षिणाहिरण्य सम्पान्त० महाभार

तोयसुवर्णदाने॰ दत्वासुवर्णं नृपते किल्विषा
द्विप्रमोच्यते॰ पूजादि विधाय॰ अद्य किल्विष
विमोककाम इदं हिरण्यमग्नि दैवतमित्या
दि॰ दक्षिणा सुवर्णस्यभांन्तं॥ विष्णुधर्म्मोक्त
हिरण्यदाने सुवर्णदानंगोदान पृथिवीदानमेव
च॰एतत्प्रयच्छमानोवैसर्वपापै प्रमुच्यते॥ पूजा
दि विधाय॰अद्यसर्वपापप्रमुक्तिकाम इद हिरण्य
मग्निदैवत मित्यादि ॰दक्षिणास्यभांन्तं॰ पुष्या
दिष्वाग्नेय पुराणीय हिरण्यदाने॰ पुष्येवाज
न्मनक्षत्रे अयनेविषुवेषुच॰ ग्रहणेच व्यतीपा
ते संक्रान्तौच दिनक्षये॥ यानमश्वमनडाहं
हेमरूप्य मणीस्तिलान्॰ येप्रयच्छन्ति पात्रेषुनि
रता. सर्वदामुने॰ नैतेषाभैरव: पंथादत्वेददा
नमुत्तमम्॰ पूजादि विधाय॰ अद्यभैरवमार्ग
प्राप्यशेष पापक्षयकाम इदंहिरण्यमग्निदैव
त मित्यादि॰ दक्षिणास्यभांन्तं॥ विष्णुधर्म्मो
क्तहिरण्यदाने॥ सुवर्णपरमंदानं सुवर्णं दक्षि
णापरा॥ दशपर्वान्दशपरानात्मानञ्चविशाम्प

ते॥ अपिपाप शतकृत्व। दत्त्वाविप्रेषु दापयेत्॥ पापशतकृत्वेतिवचनाद्व ऊपापक्षयफलम्॥ पूजादिविधाय अद्यदशपूर्व्वंदशावरस्ववंश्य पुरुषात्म नरकप्रापक बऊप पक्षय कामइदं हिरण्यम ग्नि दैवत मित्यादि ० दक्षिणास्म शान्तं ० बऊ वचनं बऊप्रयोगापेक्ष॥ आदित्य पुराणीय सुवर्ण दाने॥ सुवर्णाये प्रयच्छन्ति तम्यनशयति दुर्गति.॥ जन्मप्रभृति यत्पापंमातृक पैतृकन्तथा॥ सुवर्णदाता दारिद्र्यं नपश्यति कदाचन॥ मणिमुक्ताप्रवालैश्च वैदूर्य्येणच भूषित:॥ गन्धर्व्वैश्चाप्सरोभिश्चस्तूयमान समन्तत॰॥ गच्छते रुद्रलोकन्तु विष्णुलोकन्तथैवच॥ पूजादिविधाय० अद्यदुर्गति विनाश मातृक पैतृकयावज्जन्मोत्पन्न पापक्षयदारिद्र्यानुत्पत्तिमणिमुक्ताप्रवाल वैदूर्य्यालङ्कतत्व बऊगधर्व्व वह्वप्सर. सर्व्वत॰ स्तूयमानात्म रुद्रलोकगमनकाम इद हिरण्य मग्निदैवत मित्यादि ० दक्षिणाहिरण्य स्पशान्तं शिवपुराणीयानुष्ठत्तौशिवपुराणीयहिर

णादाने ० गोसहस्रप्रदातारो भूमिदातार एव च ॥ येसुवर्णं प्रदातारस्तथासर्वप्रियंवदाः ॥ तेतत्रगत्वातुष्टास्तुनिवसन्तियथासुखम् ० कल्पायुतसहस्राणां सहस्राणि चतुर्दश० विचरित्वा पुरश्चरपुन प्राप्यमहीतलम्॥ जायन्ते श्रेष्ठ वर्णेषु सुखै परमैर्युत ॥ पूजादि विधाय ० अद्यश्रीमन्महेश्वर पुरगमन पूर्वत्वहर्ष वत्वयथासुखशिवपुरवासकल्पायुतसहस्र सव्यकच तुर्द्दश सहस्रावच्छिन्नैतत्पुरवर विचरणोत्तर महीतलप्राप्ति पूर्व्वकश्रेष्ठ सुवर्ण जन्मपरम सुख यत्नत्वकाम इदंहिरण्यमग्निदैवतममुकगोत्रायेत्यादि ० दक्षिणाहिरण्यस्पर्शान्तं ० विष्णुधर्म्मोत्तरीयसुवर्णदाने ० सुवर्णदः स्वर्गलोकेकामानिष्टानवाप्नुयात् ॥ विरजोम्बर संवीत. परियातिदूतस्ततः ॥ विमानेनार्क्कवर्णेनभास्वरेण विराजता अप्सरोगण संकीर्णेभास्वतास्वेनतेजसा ॥ हंससारससयुक्तकामगेननरोत्तमः ॥ दिव्यगंधवह. स्वर्गेपरिगच्छे

त्तरन्तृपतित्वभवनकामइदंहि रण्यमग्निदैवत मित्यादि॰ दक्षिणाहिरण्यस्मर्भान्त ॥ विष्णुधर्मीयहिरण्यदाने॰ यममार्गानुवृत्तौ॥ हिरण्यदाः सुखयान्तिपुरुषाश्चवलकृताः॥ पूजादिविधाय॰ अद्यस्वलंकृतात्मरूदेकयमसार्गाधिकरण कसुखगमनकाम इदं। हिरण्यमग्निदैवतमित्यादि॰ दक्षिणासुवर्णस्मर्भान्त ॥ विष्णुधर्म्मोत्तरे सुवर्णदाने ॥ दत्वासुवर्णलोकेषुयथेष्टं सहितेमोदते॥विमानेनार्क वर्णेन हंसयुक्तेनभास्वता॥दैवया मागणाढ्ये नकामगेनविराजता ॥ भुक्त्वादिविचिरंभोगान्मानुष्ये सुखमाप्नुयात् ॥ पूजादिविधाय॰ अद्यवह्निलोकाधिकरणकयथेष्टमोदनार्कवर्णहंसयुक्तदीप्तिमद्दैवामोगणाढ्यकामगविमानकरणकस्वर्गाधिकरणकचिरकालावच्छिन्न बहुभोगभुक्त्युत्तर मनुष्यत्वाधिकरणक सुखप्राप्ति कामइदं हिरण्यमग्नि दैवतमित्यादि दक्षिणाहिरण्यस्मर्भान्त ॥ शुद्धसुवर्णदाने सु

वर्णमञ्जरद्दत्वा लोकानाप्नोतिपुष्कलान्॥ पूजादिविधाय॰ अद्यपुष्कललोकप्राप्तिकामइदं हिरण्यमग्निदैवत मित्यादि॰ दक्षिणान्तम्॥ वराहपुराणीय हिरण्यदाने॰ यमगृहानुदृष्टौ॰तिलान्गाश्चहिरण्यञ्च पृथिवीमपि शाश्वतीं॥ ब्राह्मणेभ्यःप्रयच्छन्तिनगच्छन्तिन शसव॰॥ यमगृहंनगच्छन्तीत्यर्थः॥ बहुवचनं दातृबहुत्वापेक्ष पूजादिविधाय॥ अद्ययमगृहानुसर्पणकामइदं हिरण्यमग्नि दैवत ममुकगोत्रायेत्यादि॰ दक्षिणाहिरण्यस्यान्तं॥ ब्रह्मपुराणीयहिरण्यदाने॥ सुवर्णरजतवापिविद्रुमंमौक्तिकंतथा॥ येप्रयच्छन्तितेयान्तिविमानैः कनकोज्ज्वलैः॥ पूजादिविधाय॰ अद्यकनकोज्ज्वलविमानकरणकगमनकामइदं हिरण्य मग्नि दैवतमित्यादि॰ दक्षिणाहिरण्यस्यान्तं आग्नेयपुराणीयहिरण्यदाने॰ दत्तपूर्वानमदाश्वैवप्रोवाचेदंवृहस्पति.॥ सुवर्णयेप्रयच्छन्ति नराःसन्तारयन्तिते॥ पूजादिविधाय॰ अद्यद

ऽपूर्वंद्यावरपुरुषसन्तारणकाम इदं हिरण्यम
ग्निदैवतमित्यादि० दक्षिणाहिरण्यस्यमौन्तं ०
दुःस्वप्नदर्शनेमहाभारतीयहिरण्यदाने ॥ आ
दित्योदयसम्प्राप्तौ विधिमन्त्रपुरस्कृतम् ॥ ददा
तिकाञ्चनंयोवै दुःस्वप्नंप्रहन्तिसः ॥ मंत्रोव
च्यते ॥ पूजादिविधाय० हिरण्यगर्भगर्भस्त्वं हे
मबीजंविभावसो। ॥ अनन्तपुण्यफलदमतःशा
न्तिम्प्रयच्छमे ॥ इतिपठित्वा ॥ अद्यदुःस्वप्नसू
चितानिष्टानुत्पत्तिकामइदंहिरण्यमग्निदैवत
मित्यादि० दक्षिणाहिरण्यस्यमौन्तं ० प्रातः
कालेहिरण्यदाने ॥ ददात्युदितमात्रेयः तस्य
पाप्माविधूयते ॥ पूजादिविधाय० अद्योदित
मात्रेसूर्य्यंपापक्षयकाम इदंहिरण्यमग्निदैवत
मित्यादि० दक्षिणाहिरण्यस्यमौन्त ॥ मध्या
ह्ने हिरण्यदाने ॥ मध्याह्ने ददतोरुक्मं हन्ति
पापमनागतं पूजादिविधाय० अद्यमध्याह्ने
अनागतपापविरहकाम इदंहिरण्यमग्निदैवत
मितयादि० दक्षिणाहिरण्यस्यमौन्त ॥ सा

यं सन्ध्यायां धृतव्रतकर्तृकसुवर्णदाने ॥ ददाति पश्चिमां सन्ध्यां यः सुवर्णं धृतव्रतः ब्रह्मवाय्वग्नि सोमानां सालोक्यमुपयाति सः ॥ सेन्द्रेषु चैव लोकेषु प्रतिष्ठां लभते शुभां ॥ इह लोके यशः प्राप्य शान्तपाप्मा द्विजातिषु ॥ ततः सम्पद्यते तेषु लोकेष्वप्रतिमः सदा ॥ अनाहत्यगतिश्चैव कामचारी भवत्युत ॥ न च क्षरति तेभ्यश्च यशश्चैवाधिकं भवेत् ॥ धृतव्रतो हुताहारः ॥ फलभूयस्त्वादत्र देय सुवर्णबहुत्वमिति सागरः ॥ पूजादि विधाय॰ अद्यसायंसन्ध्यायां ब्रह्मवाय्वग्निसोमसालोक्यो पगमनसेन्द्रबहुलोकाधिकरणकशुभप्रतिष्ठालाभैतल्लौकिकयशःप्राप्त्युत्तरशान्तपाप्मात्मक र्तृमोदनतदुत्तरान्यबहुलोकाधिकरणकसदातनाप्रतिमत्वानाहतगतित्वकामचारित्वभवन तल्लोकापादानकाक्षरणमहायशःप्राप्तिकाम इदं हिरण्यमग्निदैवतमित्यादि ॥ दक्षिणा हिरण्यं सम्प्रददे ॰ नन्दिपुराणीयाधीतिरक्तिक हिरण्यातोलकदाने ॥ कृष्णा वा. पञ्चमाषसुमा

षैःषोडशभि स्मृतः ॥ सुवर्णएकस्तद्दानाद्दाता स्वर्गमवाप्नुयात् ॥ पूजादिविधाय ॥ अद्यस्वर्गा वाप्ति कामोमुं सुवर्णम ग्निदैव तममुकगोत्राये त्यादि ॥ दक्षिणास्यमोन्तम् ॥ स्कन्दपुराणे । ब्रा ह्मणस्यविशुद्धस्यसुवर्णंयःप्रयच्छति ॥ सुवर्णानाश तंतेनदत्त भवतिनिश्चितं ॥ सुवर्णमधीतिरक्ति कम् ॥ पूजादिविधाय० अद्यसुवर्णशतदानज न्यफलसम फलप्राप्तिकामो मुं सुवर्णमग्निदैवत मित्यादि० दक्षिणास्यमोन्त ॥ दरिद्रायसु वर्णतोलकदाने ० सुवर्णंय. प्रयच्छेत्तुदरिद्राय द्विजातये ॥ दशानामश्वमेधानाफलंप्राप्नोतिमा नव ॥ पूजादिविधाय० अद्यदशाश्वमेधयज्ञज न्यफल समफल प्राप्तिका मोमुं सुवर्ण मग्निदै वतमित्यादि ० दक्षिणाहिरण्यास्यमोन्तं महाभारते सुवर्णतोलकदाने ॥ यःसुवर्णंसुवर्ण स्यब्राह्मणायप्रयच्छति ॥ निर्दोषस्यसनाकेतुमोद व्द शतंनर.॥ पूजादि.विधाय॥ अद्यअव्दशताव च्छिन्नाकाधिकरणकमोदनकामोमुसुवर्णमग्नि

दैवतमित्यादि॰ दक्षिणास्यर्थान्तं॥ विष्णुधर्म्मो त्तरे। हिरण्यमाषदाने ॥ तथाचपञ्चवर्षाणि स्वर्गेदत्वैकमाषकं॥ पूजादिविधाय॥ अद्यस्व र्गाधिकरणकपञ्च वर्षावच्छिन्न सुखित्वभवनका मइदंमाषमितहिरण्य मग्निदैवत मित्यादि॰ दक्षिणाहिरण्यस्यर्थान्तं॥ हिरण्यकृष्णल दाने॥ सकृत्कृष्णलदानेनस्वर्गेवर्षंसुखीभवे त्॥ पूजादिविधाय॥ अद्यस्वर्गाधिकरणकव र्षपर्यन्तसु खित्वभवनकाम इदंकृष्णलमितहि रण्यमग्निदैवतमित्यादि॥दक्षिणास्यर्थान्त॥इ तिसुवर्णदानम्॥ अथरजतदानं॥ तत्रमनुः रूप्यदोरूप्यमुत्तमम्॥ पूजादिविधाय॥ अद्यो त्तमरूपप्राप्तिकामइदंरूप्यं चंद्रदैवतमित्यादि॥ दक्षिणास्यर्थान्तं॥ नारसिंहेरजतदाने॥ रूप्य दानेनस्वर्गन्तुलभतेनिर्म्मलनरः॥ पूजादिवि धाय॥ अद्यनिर्म्मलस्वर्गप्राप्तिकाइदंरूप्य चंद्रद वतमित्यादि॰ दक्षिणास्यर्थान्तं॥ ब्राह्मे रज तदाने॰ सुवर्णंरजतंवापिविद्रुममौक्तिकन्त

या ॥ ये प्रयच्छन्ति ते यान्ति विमानैः कनकोज्ज्वलैः ॥ पूजादि विधाय० अद्य कनकोज्ज्वलविमानकरणकात्म गमनकाम इदं रजतं चन्द्रदैवत मित्यादि दक्षिणास्पर्शान्तं ० आग्नेये पुष्परागयनादिषु रूप्यदाने ॥ रूप्यमुपकम्प्य ये प्रच्छयन्ति पापेषु निरता सर्वदा मुने ० न तेषां भैरव. पन्थाः दत्त्वा यादानमित्युत ॥ पूजादि विधाय० अद्यामुक निमित्त भैरवमार्ग प्रापकाशेष.पापक्षयकाम इदं रजतं चन्द्रदैवतमित्यादि० दक्षिणास्पर्शान्तं ॥ इति रजतदानं ॥ अथालंकरणदाने ॥ नंदिपुराणे० अलंकरणन्तु यो दद्याद्विप्रायाथ सुराय वा० सगच्छेद्वारुण लोकं नानाभरणभूषित ॥ जातः पृथिव्यां कालेन भवेद्द्वीपपतिर्नरः ॥ पूजादि विधाय अद्य नानाभरण भूषितात्मीय वारुण लोकगमन पृथिव्यधिकरणक जन्मोत्तर द्वीपपतित्वभवन काम इदमलंकरण विष्णुदैवतमित्यादि० दक्षिणास्पर्शान्तं ॥ विष्णुधर्मोत्तरीये रुक्माभरणदाने ॥ रुक्माभरणदानेन सुखी सर्वत्र जाय

ते ॥ चिरान्नाकपरिभ्रष्टोरूपसौभाग्यसंयुतः ॥ सताकुलेतुसस्फीतेनरस्सर्वगुणैर्युतः। पूजादि विधाय॥ अद्यसार्वत्रिकसुखित्वचिरसमयनाका वस्थानोत्तररूपसौभाग्य संयुतत्वसुस्फीतसत्कु लाधिकरणकसर्वगुणो पेतात्मीयजन्म कामइदं रुक्म। भरणं.विष्णु दैवतमि त्यादि॥दक्षि णास्म र्पान्तं ॥ वामनेब्राह्मणायालङ्कारप्रति ॥ पुरु षोत्तमस्यप्रीत्यर्थप्रदेयंसार्वकालिकं। सार्वका लिकमनि यतमासदेयंप्रकरणात्॥ पूजादिवि विधाय अद्यपुरुषोत्तम प्रीतिका मइदमलंका रणंविष्णुदैवतमित्यादि। दक्षिणास्मर्पान्त ॥ अथतैजसपात्रदानम्॥ तत्रविष्णु॰ तैजसानांपा त्राणांदानेनपात्रीभवतिकामाना॥ तैजसानासौ वर्णाना॥ पूजादिविधाय॥ अद्यवहुकामभाज नत्वकामइदंतैजसपात्र विष्णुदैवत।मित्यादि ॥ दक्षिणास्मर्पान्तं स्कान्देरत्नभूषितहेमभाजनदा ने॥ भाजनय॰ प्रयच्छेतुहैमंरत्नविभूषितम्। सोमरः शतसंकीर्णविमानेदिविराजते। पूजा

दिविधाय ॥ अद्य स्वर्गाधिकरणकाप्सरःशतसं
कीर्णविमानाधिकरणकविराजमानत्वकामइदं
रत्नभूषितहेमपात्रं विष्णुदैवतमित्यादिदक्षिणा
स्वर्णान्तं ॥ विष्णुधर्मोक्त रौप्यरुक्मपात्रदाने ॥ रु
क्मपात्रप्रदानेनपात्रीर तमानवः।सर्व्वेषामेवदा
नानाफलस्त्रिदिवस्रच ॥ पूजादिविध.यअद्यस
र्वदानफलप्राप्तिदिवप्राप्तत्वभवनकामइदं रुक्म
पात्रं विष्णुदैवतमित्यादिदक्षिणास्वर्णान्तं ॥ शो
भनरजतपात्रदाने॥ राजतंयःप्रयच्छेत्तुविप्रेभ्यो
भाजनंशुभम्। सगन्धर्व्वपदप्राप्यउर्व्वशा।सहमो
दते॰ पूजादि विधाय अद्यगन्धर्वपदप्राप्तिपूर्व
कोर्वशीसहमोदन कामइदशोभनरजतपात्र वि
ष्णुदैवतमित्यादि दक्षिणा स्वर्णान्तं ॥ ता
म्रभाजनदाने ॥ ताम्र योभाजनंदद्याद्ब्राह्म
णेभ्योविशेषतः। सभवेद्यक्षराजस्ययक्षोवस्त्र
समन्वितः ॥ पूजादिविधाय ॥ अद्यवस्त्रसम
न्वितयक्ष राजयक्षत्वभवन कामइदंताम्रभाज
नविष्णु दैवतमित्यादि॥ दक्षिणास्वर्णान्तं॥ वि

ष्णु धर्म्मे ताम्रभाण्डचयदाने ॥ ताम्रायसानां भा
ण्डानां दातारत्नाधिपो भवेत्। लभतेऽनुत्तमस्था
नवलवान् जायते सदा॥ पूजादिविधाय ॥ अद्यानु
त्तमस्थानलाभसार्व्वदिकवलवत्त्वरत्नाधिपत्वभव
नकाम एतानि ताम्रभाण्डानि विष्णुदैवतानीत्या
दि ॥ दक्षिणास्यशीन्त्तं ॥ आयसभाण्डचय दा
नेऽपीदमेव फलम् ॥ क्रियापेक्षद्वन्द्वात् प्रत्येकमे
वदानं ॥ सलवणतैजसपात्राणां दाने ॥ तैजसा
नि च पात्राणि दत्वा सलवणानि तु ॥ पात्रतामेति
कामानां लावण्यञ्चाप्युयाम्महत्। तैजसानि का
स्यताम्रादिपात्राणि ॥ पूजादिविधाय॥ अद्यवञ्च
कामभाजनत्वभवनपरम लावण्यप्राप्तिकाम ए
तानि सलवणतैजसपात्राणि विष्णुदैवतानीत्या
दि ॥ दक्षिणास्यशीन्त्तं ॥ सतैलतैजसपात्रा
णां दाने ॥ तैजसानि तु पात्राणि सतैलानि प्रयच्छ
तः। आरोग्यमुत्तमं प्रोक्तं लावण्यमपि चोत्तमं
पूजादिविधाय अद्यडत्त मारोग्योत्तमलावण्य
प्राप्तिकाम एतानि सतैलतैजसपात्राणि विष्णु

दैवतानीत्यादि ॥ दक्षिणास्सर्शान्ति ॥ समधु
तैजसपात्राणांदाने । तैजसानितुपात्राणिसम
धूनिप्रयततः ॥ लावण्यमुत्तमं प्रोक्तं सौभाग्य
मपिचोत्तमम् ॥ पूजादिविधाय॥अद्यडत्तमलाव
ण्योत्तमसौभाग्यप्राप्तिकाम एतानिसमधुतैज
सपात्राणिविष्णुदैवतानीत्यादि ॥ दक्षिणा स्स
र्शान्तं॥ अथजलप्रदानं॥ ब्रह्मपुराणे॥ जलपा
त्रप्रदातारः कुटिकाकरकप्रदा ॥ पूज्यमानाश्च
सरोभिर्यान्तिहंसाश्वागजैः ॥ पूजादिविधा
य अद्यवह्वसर: पूज्यमानहंसाश्वकर्टकवकुम
श्वागजकरणककामनकामइदंपूर्णजलपात्रवरु
णदैवत मित्यादि दक्षिणास्सर्शान्त ॥ स्कन्दे
न्दे जलपूर्णभाण्डदाने ॥ अपांपूर्णन्तुयोभा
ण्डं ब्राह्मणायप्रयच्छति । रसास्तस्योपति
ष्ठन्ते पूज्यतेच वियद्गतः ॥ पूजादिविधाय
अद्यबह्वसरोपस्थिति वियदाधिकरणकपूज्यत्व
कामइदंजलपूर्णभाण्डंवरुणदैवतमित्यादि ॥
दक्षिणास्सर्शान्त ॥ अथपानीयदानम् ॥ त

नयाज्ञवल्क्योक्तजलदानं प्रति॥ दत्वास्वर्गेमहीय
यते० पूजादिविधाय अद्यस्वर्गमहितत्वकामइदं
पानीयविष्णुदैवतमित्यादि ॥ दक्षिणास्यर्शा
न्तं ॥ स्कन्दे धूपितशीतलजलदाने ॥ सुगन्धाः
शीतलाश्चापोरसैर्दिव्यैः समन्विताः य प्रयच्छ
तिविप्रेभ्यस्तस्यदानफलंशृणु । विमानसूर्य्य
संकाशमप्सरोगणसेवित॥सोऽधिरुह्यदिवंयाति
वरुणस्यसलोकताम् ॥ ततवर्षायुतान्यष्टावुषि
त्वादेववत्सुखी ॥ कुलेमहत्यसंकीर्णेजायतेधन
धान्यवान् । सुगन्धाःकर्पुरादिधुपिता ततएवो
त्तमरसत्वय. पूजादिविधाय अद्याप्सरोगणसे
वितसूर्यसंकाशविमानाधिरोहण पूर्वकस्वर्गलो
कगमनवरुण सालोक्यप्राप्ति तल्लोकाधिकरण
काष्टायुतवर्षावछिन्न देववत्सुख्यात्मवा सोत्तरा
संकीर्णमहाकुलजन्मधनधान्य सम्पत्तिकामए
ता सुगन्धा. शीतलादिव्यरससमन्विताअपोवरु
णदैवतायथानामगोत्रेभ्योब्राह्मणेभ्यइत्यादि॥ द
क्षिणास्पर्शान्तं ॥ फलभूयस्त्वाहङ्कलमस्या

दातव्याः ॥ नन्दिपुराणीयतृषार्त्तवारिदाने ॥ योपिकश्चित्तृषार्त्तायजलदानंप्रयच्छति। सनित्य तृप्तोवसतिस्वर्गेयुगशतंनृप ॥ पूजादिविधाय॥ अ द्यनित्यतृप्तत्वयुगशतावच्छिन्न स्वर्गवासकामइद वारिवरुणदैवतमित्यादिदत्तिणास्वधान्त ॥ विष्णुधर्मेपानीयदाने०। पानीयस्यप्रदानेन तृप्तिर्भवतिशाश्वती ॥ पूजादिविधाय० अद्य शाश्वततृप्ति कामइदपानीयंवरुणदैवतमित्या दि० दत्तिणासधांत० आदित्यपुराणेतृषार्त्त वारिदाने ॥ स्कन्धेनतारयेयस्तुतृषार्त्तानांजल प्रदः ॥पक्वान्ददातिकेदारानुसफलाश्चैवपादपा न्। षष्टिकोटिसहस्राणिअर्बुदानाञ्चवैनय ॥ क्रीडन्तितेस्वत पुरेएतदुक्तोद्विजोत्तमः इहा पिफलोत्कर्षात् सुरभिशीतलत्वादिगुणोत्क र्षइतिसागरः पूजादिविधाय ॥ अद्यषष्टिको टिसहस्रार्बुदनयाव्दत्रयावच्छिन्नस्वेतपुराधिक रणकक्रीडनकाम एतानिजलानिवरुणदैवता नियथानामगोत्रायब्राह्मणायसम्प्रददे इत्यादि दत्तिणा

स्मृतिः ॥ तृषार्त्तानामितिवङ्लात्वाङ्ङ्भ्यो दानम् ॥ महाभारतेतोयदाने ॥ तोयदोमनुज व्याघ्रस्वर्गंगत्वामहाद्युते॥ अक्षयान्समवाप्नोति लोकानित्यब्रवीन्मनु ॥ पजादिविधाय॥ अद्यास्व र्गगमनपूर्व्वकाक्षयवङ्लोकावाप्तिकामइदंतोय वरुणदैवतमित्यादि ॥ दक्षिणा,स्मृतिः ॥ अथरत्नदान ॥ तत्रयथेक्ताविविधरत्ने। राजो पकरणन्दत्वारत्नानिविविधानिच। नगरञ्चत थ,दत्वाराजाभवतिभूतले ॥ पूजादिविधाय ॥ अद्यभूतलाधि करणकराजत्वभवन कामएता निविविधरत्नानिविष्णुदैवतानीत्यादि।दक्षिणा स्मृतिः॥रत्नानिमुक्तामरकतप्रवलवैडूर्यकादी नि ॥ विष्णुधर्म्मोत्तरीयवङ्रत्नदाने ॥ रत्ना नाम्प्रदानेनराजैवेहप्रजायते ॥ रत्नदानस्यचल्लो कन्तङ्क्तासुचिरद्विजाः ॥ पूजादिविधाय ॥ अद्यसुचिरकालाव च्छिन्नरत्नदानप्राप्यलोको पभोगपूर्व्वकैहिकलौकिकराजत्वभवनकामएता निरत्नानिविष्णुदैवतानीत्यादि॥ दक्षिणास्मृतिः

न्तं ॥ आग्नेयपुराणादिषु वज्रमणिदाने ॥ मणीन्प्रकृत्य ॥ येप्रयच्छन्तिपापेषुनिरताःसर्वं दास्यने । नतेषाभैरवः पंथादत्वैषादानमित्युक्त॥पूजादिविधाय अद्यभैरवमार्गप्राप्तकामोशेषपाप क्षयकाम एतान्मणीन् विष्णुदैवतानित्यादि० दक्षिणास्पर्शान्तं ॥ विष्णुधर्म्मे हीरकदाने ॥ वज्रद. शक्रलोकन्तु ॥ पूजादि विधाय ॥ अद्यशक्रलोकप्राप्तिकाम इदं हीरकं विष्णुदैवत मित्यादि । दक्षिणास्पर्शान्तम् ॥ पद्मरागदाने ॥ पद्मरागप्रदोरवे ॥ पूजादिविधाय ॥ अद्य रविलोक प्राप्ति काम इदं पद्मराग विष्णुदैवत मित्यादि ॥ दक्षिणास्पर्शान्तम् ॥ मरकतदाने । मर्त्योमरकतन्दत्वाविष्णुलोकेमहीयते ॥ पूजादिविधाय ॥ अद्यविष्णुलोक महित त्वकाम इदं मरकत विष्णुदैवतमित्यादि ॥ दक्षिणास्पर्शान्तं ॥ मुक्तादाने ॥ मुक्ताफलप्रदानेनवारुणंलोकमश्नुते ॥ पूजादिविधाय ॥ अद्यवारुणलोकप्राप्तिकामइदंमुक्ताफल

वरुणदैवतमित्यादि॥ दक्षिणासम्प्रान्तं॥ वैदूर्य्यदाने॥ वैदूर्य्यस्यप्रदानेनद्वीपानामाद्यमोदते। पूजादिविधाय॥ अद्यवङ्कद्वीपप्राप्तिपूर्व्वकमोदनकाममदंवैदूर्यंवरुणदैवतमित्यादि॥ दक्षिणासम्प्रान्तं पद्मरागादिरत्नदाने॥ रत्नान्यन्यानिदत्वाचराजराजस्यतुद्विजाः॥ लोकमासाद्यमोदत इतिसम्बन्धः॥ पूजादिविधाय॥ अद्यराजराजत्वलोक प्राप्तिपूर्व्वकमोदनकाममदंपद्मरागविष्णुदैवतमित्यादि॥ दक्षिणासम्प्रान्त॥ एवंनीलगोमेदकदलीगर्भदानेपीदमेवफलम्॥ अन्यपदेनोक्तहीरकादिपंचशेषपूर्वकपुष्परागादिचतुष्टयाभिधानादिति॥ आद्ये प्रवालदाने॥ विद्रुमंप्रकृत्य॰ येप्रयच्छन्तितेयान्तिविमानैः कनकोज्वलैः॥ पूजादिविधाय॥ अद्यकनकोज्वलविमानकरणकात्मीयगमनकाममदमुक्ताफलं वरुणदैवतमित्यादिदक्षिणासम्प्रान्तं॥ अथहेममुनिरूपचिग्रत्नाल्पदानं॥ तत्रकल्पाद्युपक्रमः॥ मत्स्यपुराणे॥ यस्तुदद्या

द्रिमान्कृत्वा हैमान् पर्व्वणिपर्व्वणि ॥ ब्रह्मविष्णु पुरे कल्पं पूजयतेमुनिभिर्द्दिवि ॥ सर्व्वपापक्षयकरं कल्पदानयतो भवेत् ॥ मुनिरूपांस्तत कृत्वा दद्यात् कल्पान् विचक्षण ॥ मुनिलक्षणन्तु० जटिलाः श्मश्रुलाः शान्ता कृशाधमनिसन्तताः कुसुम्भाम्बराः कार्य्यास्तपयोद्विजपुङ्गवा ॥ धमनि शिरा कुसुम्भं कमण्डलुः ॥ पूजादिविधाय ॥ अद्यामुकपर्व्वणि सर्व्वपापक्षयकल्पावच्छिन्नस्वर्गाधिकरणकब्रह्मविष्णुपुरवसमुनिपूजकत्वकामदद्रुमान्हैमान्श्वेतनीललोहितवामदेव रथन्तररौरवप्राणकृतकन्दर्पसत्यशालाव्यानसारस्वतोदानगारुडकौर्म्मनारसिंहसमानाग्नेयसोमसमानवतत्पुरुषवैकुण्ठलक्ष्मीसावित्रीघोरवाराहवैराजगौरीमाहेश्वरपितृसञ्ज्ञिशल्कल्पान्मुनिरूपान्विष्णुदैवतानित्यादि ॥ दक्षिणा स्वशक्तं ॥ मत्स्ये० मानवोत्रिंशतिकल्पस्तत्पुमानितिचापरः ॥ तत्पुमान्तत्पुरुषइति ॥ अथ विष्णुदैवतगृहदानम् ॥ तत्र महाभारतीयव

क्ववीजशय्यान्वयोपेतगृहदानम् ॥ वीजैरुपेतं शय नैरुपेतदद्याद्गृहं यः पुरुषो द्विजाय । सुखाभि रामं बहुरत्नपूर्णं लभेदधीष्ठानवरं सराजन् ॥ वीजै यवगोधूमधान्यादिभिः ॥ पूजादिविधा य ॥ अद्यसुखाभिरामबहुरत्नपूर्व्व वराधिष्ठान लाभकाम इदं गृहं बहुवीजशय्यान्वयोपेतं विष्णु दैवतमित्यादि दक्षिणागृहप्रवेशान्तं ॥ आदि व्यपुराणीयसोपकरणगृहदाने ॥ सर्व्वैस्समा युक्तैरुपस्कारैर्भितं दद्याद्गृहं ब्राह्मणाय व्रताय सर्व्वांश्च कामान्लभते चशेषं पुत्रांश्च पौत्रांश्च लभे त्समग्रान् ॥ सर्व्वभाण्डैः गृहवस्त्वुचितसर्व्वो पकरणै.॥ पूजादिविधाय॥अद्यशेष सर्व्व कामा वाप्तिसमग्रबहुपुत्रपौत्रलाभ कामोनानाविधधा न्यदासीदासगोमहिषीशय्यापोठपादुकाकांस्य भाजनताम्रकलशताम्रघटीपित्तलीपित्तलदीपह स्तनानाविधवस्त्रमयपात्रस्थालासुषलोदूखलशूर्प्पसं मार्ज्जनीकुद्दालदात्रकुठारखनित्रकर्त्तरीशर्करा लवहतिवगुड घृततैललवणाद्रकहिंगु मरिच

धान्याकसर्षप कःरिद्राशुन्ठीपिप्पलीमुद्ग माष मसूरविदलकादिरन्धनोचितसामग्रीभिश्च पट्ट शिलापुत्रकादिगृहवसत्युचितसामग्रीलौहकन कानेकविविधवस्त्रयुतमिदं गृहंविष्णुदैवतमि त्यादि ॥ दक्षिणागृहप्रवेशान्त ॥ ब्रह्मपुराणीय सोपकरणगृहदाने ॥ गृहंयस्तुप्रयच्छेतसर्व्व कामसमृद्धिमत्। सलोकंब्रह्मण प्राप्यसर्वका मैर्न्निषेव्यते। वर्षकोटी सतन्नोष्यचतस्त्तेनक स्मा। गृहमेधीसदादाताभोगवांश्चैवजायते ॥ सर्व्वकामसमृद्धिमदिति गृहस्योपकरणयावद्गृ हवसत्युचितसामग्रीसम्पन्नमित्यर्थं ॥ पूजा दिविधाय॥ अद्यब्रह्मलोकावाप्तिपूर्व्वकसर्व्वकाम सेव्यमानत्वैतल्लोकवर्षकोटि चतुष्टयवास पूर्व्वक गृहमेधित्वसदादातृत्वभोगित्वभवनकामोनाना विधधान्यदासीदासगोमहिषी शय्यापीठपादुका कांस्यभाजनताम्रकलशताम्रघटीपित्तलीपित्तल दीपवृक्षनानाविधमृण्मयपात्रस्थालमुषलोदूखल शूर्प्पसम्मार्ज्जनीकुद्दालदात्रकुठार खनित्रकर्ष

शीर्षक्रं शाखगुडतिलगुड घृततैललवणार्द्रकहिं
गुमरिच धान्याकसर्षपहरिद्रा शुंठीपिप्पली
मुद्ग माष मसूर विदलादि रन्धनो चितसा
मग्रोशि लापट्टशिलापुत्रका दिगृहवस्त्वु चित
सामग्रीलौह कनकानेकविध वस्त्रयुतमिदगृह
विष्णु दैवत ममुकगोत्रायेत्यादि । दक्षिणागृ
हस्यशान्तं ॥ इत्थंसत्वुक्तसोपकरणगृहदाने ॥
रसान्नोपकरयुतगृहं विप्राययोर्चयेत् ॥ तस्य
नश्यीयती वंश स्वर्गमाप्नोत्यनुत्तमम् ॥ पूजादि
विधाय ॥ अद्यअक्षीणवंशानुत्तमस्वर्ग प्राप्ति
नानाविधधान्यदासी दासगोमहिषी शय्यापो
ठपादुका कांस्य भाजनताम्रकलश ताम्रघटी
पित्तलीपित्तलदीपदृढनानाविधमृन्मयपात्रस्था
लमुसलोदूखलशूर्पसम्मार्ज्जनीकुद्दालदात्रकुठा
रखनित्रकर्त्तरीशर्क्करा खगुडतिलगुडघृततैलल
वणार्द्रकहिंगुमरिचधान्याकसर्षपहरिद्राशुंठी
पिप्पलीमुद्गमाषमसूरवि दलकादि रन्धनोचि
तसामग्रीशिलापट्ट शिलापुत्रकादिगृहवस्त्वु

चित सामग्री लोहकनकानेकविधवस्त्ररसान्नो
पस्करयुतमिदं गृहं विष्णुदैवतमित्यादि ॥ द
क्षिणागृहप्रवेशान्तं ॥ नन्दिपुराणीयव्रतशील
ब्राह्मणसम्प्रदानकसोपकरणगृहदाने ॥ यच्चवे
श्मशुभन्दद्यात्सर्वोपकरणान्वितम्‌ विप्रायनियम
स्थायसमुत सर्वं पातकात्‌ ॥ शुभमुत्कृष्टं निय
मस्थायव्रतशीलाय ॥ पूजादिविधाय ॥ अद्यस
र्व्वपातकराहित्यकामो नानाविधधान्यदासीदा
सगोमहिषीशय्या पीठपादुका कांस्यभाजनता
म्रकलश ताम्रघटी पित्तली पित्तलदीप इत्यना
नाविध मृन्मयपात्रस्थालमुसलोदूखलशूर्प्प सम्मा
र्ज्जनीकुद्दालदात्र कुठारखनित्र कर्त्तरीशर्क्करा
खण्डतिलगुडघृततैललवणार्द्रकहिंगुमरिचधा
न्याकसर्षपहरिद्राशुण्ठीपिप्पलीमुद्गमाषमसूर
विदलकादि रन्धनोचितसामग्रीशिलापट्टशि
लापुत्रकादिगृहवस्त्वुचितलौहकनकानेकवि
धवस्त्रयुतमिदं गृहं शुभं विष्णुदैवतमित्यादिद
क्षिणागृहसमर्पणान्तं ॥ विष्णुधर्म्मोत्तरीयसोप

कारणगृहदाने ॥ धनधान्ययुतं स्फीतं सर्व्वोप करणैर्युतं ॥ शय्यासनयुतं रम्यं गोजाव्यश्वयुत न्तथा ॥ गृहन्दत्व द्विजेन्द्राय तावत्स्वर्गमुपाश्नुते। यावत्कल्प वसानन्तु कल्पादौ पार्थिवो भवेत् । स्फीतं हृष्टं ॥ पूजादिविधाय ॥ श्रद्य यावत्क ल्पावसानस्वर्गभुक्तिभागित्वकल्पादिपार्थिवत्व भवनकामो नानाविध धान्यगोजाव्यश्वदासीदास गोमहिषी शय्यासनपादुकाकांस्यभाजन ताम्र क लशताम्रघटी पित्तली पित्तलदीपवृन्दकम्मयपात्र स्थालमुसलोदूखलशूर्पसम्मार्ज्जनीकुद्दालदात्रकु ठारखनित्रकर्त्तरीशास्त्र राखण्डतिलगुडघृततैल लवणार्द्रकहिंगुमरिचधान्याक सर्षपहरिद्राशु ण्ठीपिप्पली मुद्गमाषमसूरत्रिदलकादिरन्धनो चितसामग्रीशिलापट्टशिलापुत्रकादिगृहवसत्यु चित सामग्रीलौहकनकरजतानेकविधवस्त्रयुत मिदं गृहं हृद्रम्यं विष्णुदैवत मित्यादि ॥ दक्षिणा गृहप्रवेशान्तं ॥ व्यासोक्ता विद्या सम्पन्नादि द्विजसम्प्रदानकं यथाशक्तीष्टकामय

दारवन्मयान्यतमसोपकरणविपुलगृहदाने ॥ पूर्व्वोपकरणोपेतंयोदद्याद्विपुलंगृहं ॥ ब्राह्म णाय दरिद्रायविदुषेचकुटुम्बिने ॥ क्रीडि त्वासुचिरंस्वर्गेमानुष्य लोकमागतः भवत्यत्रा ह्यतैश्वर्यं सर्व्वकामसमन्वितं ॥ पूजादिविधा य ॥ इदंगृहगृहाणत्वंसर्व्वोपस्करसंयुतम् ।तव विप्रप्रसादेन ममास्त्वत्र हतफलम् ॥ इतिपठि त्वा ॥अद्यासुचिरकालस्वर्गक्रीडनपूर्व्वकमनुष्य लोकागमनतदुत्तराढ्यात्यैश्वर्यवत्वसर्व्वकामस मन्वितत्वभवनकामो घृततैललवण तण्डुलधा न्ययवगोधूममुद्गमाषमसूरकलायकंकुकुलत्थच णकतिलसर्षपद्राक्षादि कहिंगुम रिचजीरक धान्यकहरिद्राशुण्ठीपिप्पलीमुद्गमाषमसूरवि दलका।दिरन्धनोचितसामग्रीवन्मयपाषमुसलो दूखलाढकशूर्प्पसम्मार्ज्जनीदर्व्वी।शिलापट्टशिला पुत्रका।दिगृहवसत्युचितसामग्रीसो पकरणश य्याछत्रपीठपादुकाताम्रकलशताम्रघटोपित्तली पित्तलदीपहलकुद्दालकुठार दात्रखनित्रकर्त्तरी

कालादिलौहोपस्करगोमहिष्यश्वहलद्दषभदास दासोदोलाकम्बलतूलसूक्ष्मानेकविधवस्त्रकनक रजतपात्रादियतमिदं विपुलंगृहं विष्णुदैवतम मकगात्रायेत्यादि ॥दक्षिणागृहप्रवेशान्तं॥ अथ केवलगृहदानम्। तत्रमनु ॥गृहद अग्र्याणिवेश्मा नि॥प्राप्नोतीतिसम्बन्ध पूजादिविधाय॥ अद्या त्यन्तसुखित्वभवनकामइदंगृहं विष्णुदैवतमि त्यादि ॥ दक्षिणागृहप्रवेशान्तं ॥ याज्ञ वल्क्य ॥ गृहमनुक्रम्य० दत्वात्यन्त सुखीभवे त्॥ पूजादिविधाय ॥ अद्यात्यन्तसुखित्वभवन कामइदंगृहंविष्णुदैवत मित्यादि ॥ दक्षिणा गृहप्रवेशान्तं ॥ सम्वर्त्त । गृहदातासुखी प्राप्तो।बहुष्णु॰सर्व्व वस्तुषु॥पूजादिविधायअद्यसु खित्वप्राप्तत्वसर्व्ववस्तुविष्टष्णत्वप्राप्तिकामइदंगृ हंविष्णुदैवतमितत्यादि। दक्षिणागृहप्रवेशा न्तं।विष्णुधर्म्मोत्तरे। ब्राह्मणायगृहंदत्वावसूना लोकमश्नुते॥ पूजादिविधाय॥ अद्यवसुलोक प्राप्तिकामइदंगृहंविष्णुदैवतमितत्यादि॥ दक्षि

णागृहप्रवेशान्तं॥ यमोक्तगृहदाने॥ गृहदोनग
रन्तथा॥ पूजादिविधाय॥ अद्यनगरप्रान्तिका
मइदगृहंविष्णुदैवतमितगादि॥ दक्षिणागृह
प्रवेशान्त॥ स्कन्दपुराणीयगृहदाने॥ रथमश्वं
गजंदासीकन्यागृहमथापिवा। भूमिंवाय. प्र
यच्छेतसराजाभुविजायते॥ पूजादिविधाय॥
अद्यपृथिव्यधिकरणक राजत्वभवन कामइदं
गृहविष्णुदैवतमितगादि दक्षिणागृहप्रवेशा
न्तं॥ अथगोदानं॥ तत्रहदस्मत्युक्तास पकरण
सवत्सकपिलगवीदाने॥ हेमशृङ्गीरौप्यखुरा
वस्त्रकांस्याज्यभूषिता॥ सवत्साकपिलान्दत्वा
कुलंसप्तसमुद्धरेत्॥ सोपकरणकपिलगवी
पूजादिविधाय॥ अद्यसप्तकुलसमुद्धरणकामइ
माहेमशृङ्गीरौप्यखुरावस्त्रकांस्याज्यभूषितास
वत्साकपिलागांरुद्रदैवताममुकगोत्रायेत्यादि॥
दक्षिणागोपुच्छग्रहणान्तं॥ यथाशाखकामस्तु
तिपठेत्॥ यमोक्तसोपकरणधेनुदाने॥ स्वर्णशृङ्गीं
गींरौप्यखुरामुक्तालाङ्गूलभूषितांकांस्योपदो

गुग्त्व पर्य्यस्विनीम् सुव्रतावत्ससंवीता ब्रह्मलो
कैमहीयते ॥ सुव्रतासुखसन्दोह्या सोपकरण
कपिला पूजादिकं विधाय अद्येत्यादि ब्रह्मलोकमहि
तत्वकामइमां सवर्णानन्तावत्ससम्वीता कपि
लापयस्विनीं धेनुं रुद्रदैवताममुकगोत्रायेत्या
दि ॥ दक्षिणापुच्छग्रहणान्तं ॥ याज्ञवल्क्यो क्त
क्षीरिणीगोदाने ॥ हेमशृङ्गी शफैरौप्यैः सु
शीलावस्त्रसंयुता सकांस्यपात्रा दातव्या क्षीरि
णी गौः सदक्षिणा ॥ दातास्याः स्वर्गमाप्नोति वत्स
रान्रोमसम्मितान् ॥ कपिला चेत्तारयति भूय
श्चासप्तमं कुलम् ॥ सोपकरणगो पूजादि विधा
य ॥ अद्य एतद्गोरोम सम्मितवत्सरावच्छिन्न
स्वर्गप्राप्तिकाम इमां हेमशृङ्गीं रौप्य खुरां वस्त्र
सहितां सकांस्यपात्रां क्षीरिणीं गां रुद्रदैवता
मित्यादि ॥ दक्षिणापुच्छग्रहणान्तं ॥ याज्ञव
ल्क्यीयक्षीरवत्कपिलादाने ॥ सोपकरणकपिल
गवी पूजादि विधाय ॥ अद्य एतत्कपिलगवीरोम
सम्मितवत्सरावच्छिन्न स्वर्गप्राप्त्या सप्तमकुल

तारयाकाम इमाहेमश्टंगोगौप्यखुरांवस्त्रसहि
तांसकांस्यपात्रा चीरिणीं कपिला गारुद्रदैव
तांमत्यादि ॥ दक्षिणापुच्छग्रहणान्त ॥ नन्दि
पुर णोयसोपकरण कपिलगवो दाने ॥ सोगां
सुप रपूर्णांगो हैम श्टंगीमकोपनाम् ॥
सुशीला राजतं पादे। द्विवस्त्र सुस हृताम् स
से। हपात्राकृतपेनिविद्दचरणान्तथा॥ सदद्दिणां
प्रदद्याद्मासोऽस्य स्वर्गमाप्नुयात् ॥ गवियावन्ति
रोम। णि सप्रसू तिलकस्थितौ। तावन्त्यावद्दा
निवसति स्वर्गे। दातारुं ष्यय ॥ एतद्धतगुणं
प्रोक्तं कपिलादानत स्मृत. ॥सप्रसू तिवुलस्थि
तौ॥ प्रसूतिसन्तानसहिताया कुतपोनेपाल क
म्बल सोपकरणकपिलगवोपूजादिकं विधा
य ॥ अ गाद्यय स्वर्गावा प्त्ये तत्प्रसूतिकुलस्थि
तगवोरोम ममसंख्या व्द वच्छिन्नस्वर्गाभिक
रण रुद्रदासकामइमासुपरिपूर्णांगोहेमश्टंगीम
कोपनां सुशीला राजत खुरचरणाचिनवस्त्रसुस
म्बृतासजीहपात्रांकृतपनिविद्दचरणागारुद्रदै

वतामित्यादि ॥ दक्षिणा पुच्छग्रहणान्तं ॥ अथैतत्पुराणीय कपिलगवी दाने ॥ सोपकरणाक पिलगवी पूजादिकं विधाय ॥ अद्यसुपरि पूर्णांगहेमशृङ्गाकोपन सुशीलराजतचतुश्चर णचित्रवस्त्र सुसहृत सलोहपात्रकृतपर्निविष्ट चरणगवी दानजन्यफल ग्रतगुण फलप्राप्ति कामद्रूमासुपरि पूर्णांगामकोपना सुशीलांगा जतचतुश्चरणां चित्रवस्त्रसुसहृतां सलोहपात्राकृतपर्निविष्टचरणां रुद्रदैवतामित्यादि । दक्षिणा पुच्छग्रहणान्तं ॥ भिन्नपुराणीयकपिलगवीदाने ॥ य. कुर्य्यात्कपिलादानं ब्राह्मणेषविशेषत' ॥ यावन्तिरोमकूपाणितस्यागात्रेषु द्विज ॥ तावद्वर्षसहस्र स्वर्गलोके महीयते अथकालश्च यथाप्यज्ञायते त्रिपुनेकुने । ब्राह्मणेष्विति बा ह्यात्यामेकस्मिन् बहुवचनमेकस्यानेकेभ्यो दाननिषेधात् ॥ कपिलगवी पूजादि विधाय ॥ अद्यैतत्कपिलगवीरोमकूपसमसंख्यवर्षस्वर्गा वच्छिन्नस्वर्गलोक महितत्वतदुत्तरविपुलकुल

जन्मकाममूर्मांकपिलां गारुड़दैवतामित्यादि ॥
दक्षिणापुच्छग्रहणान्त आदित्यपुराणे यथो
पक्रमणकपिलगवीद ने ॥ कपिलायेप्रयच्छ
न्तिचैलच्छन्ना स्वलङ्कृता ॥ सुवर्णशृङ्गीरौप्यखु
रामुक्तालाङ्गूल भूषितां ॥ श्वेतवस्त्रपरिच्छन्ना ब
ह्मणवरैर्य्यतांसहस्रं योगवाद्या कपिलाद्या
पिसम्मता ॥ सममेवपुराप्राहब्रह्माब्रह्मविदाम्बर
देवलोकेवसेन्नित्य कपिला ददतीह्यिय ॥ दीर्घा
युर्ज्जायतेचैवभे गवां स्वियाहृत ॥ ऐश्वर्य्यवल
सम्पन्नो धनधान्यसमृद्धिमान्योददाति द्विजश्रे
ष्ठोकपिलानात्रसंशयः ॥ यावन्तिरोमकूपाणिक
पिलागेभवन्तिवै ॥ तावत्कोटिसहस्राणिवर्षा
णां दिविमोदते । चेलच्छन्नाश्वेतवस्त्रपरिच्छ
न्नामिति पदद्वयदर्शनात्प्रथमसनियतवस्त्रेणा
च्छाद्य श्वेतवस्त्रेणाच्छादनं कर्त्तव्यम् घण्टास्वनव
द्घण्टाकोलाहलैर्घण्टान्दत्वाकिङ्किणीमालापिठ
धोतसागर समन्तासुखसन्दोह्यासोपकरणकपि
लगवीप्रजादिविधाय ॥ अद्यगोसहस्रदान

अन्यफलसमफल नित्यदेवलोकनिवासदीर्घ
सुखभोगत्व आरोगत्वैश्वर्य्यबलसम्पन्नत्वधनधा
न्यसमृद्धिमत्व यावदेतत्कपिलगवीरोमकूपसम
संख्यवर्षकोटि सहस्रावच्छिन्नस्वर्गलोकमोदम
कामदुस्माचेलच्छन्नालङ्कृतासुवर्णशृङ्गीरौप्यखु
रांमुक्तालाङ्गूलभूषितां श्वेतवस्त्रपरिच्छन्नांवत्सा
सनरत्नसंयुतां कपिलां गां रुद्रदैवतामित्यादि ॥
दक्षिणागोपुच्छग्रहणान्तं ॥ आदित्यपुरा
णोक्तसोपकरणकृष्णागवीदाने ॥ कृष्णां गां ददाति
यस्तु पट्टच्छन्नालङ्कृतां । विधिवद्द्विजातिभ्यो
यमलोकं न पश्यति ॥ सर्व्वपापविशुद्धात्मा पितृ
लोकञ्च गच्छति ॥ आयुरारोग्यमैश्वर्यं दाताका
मांश्चमानसान् ॥ प्राप्नोतीति शेष ॥ सोपकरणक
पिलगवीपूजादिविधाय ॥ अद्य यमलोकादर्शन
सर्व्वपापविशुद्धात्मत्वपितृलोकगमनायुरारो
ग्यैश्वर्य्यमानसयङ्कामावाप्तिकाम इमां पट्टच्छ
न्नालङ्कृतां कृष्णां गां रुद्रदैवतामित्यादि दक्षि
णापुच्छग्रहणान्तं ॥ स्वलङ्कृतां हेमतिलकादलङ्कृ

ता॥ आदित्यपुराणीयसोपकरणनीलकृष्णागवी
दाने। नीलवर्णाञ्चगादद्याद्दोगर्भीश्रीज्ञगुणान्वि
ताम्॥ सुवर्णशृङ्गीरौप्यखुरा मुक्तालाङ्गूलभूषि
ताम्॥ पट्टच्छन्नाशुभांसौम्यांघटादामैरलङ्कृताम्
पञ्चरङ्गेणसूत्रेण गलावेष्टेनशोभिताम्। रुद्रस्य
प्रमुखेदेया विष्णोश्चब्रह्मण एव वै॥ गांददानीह
इत्येवत्रातायेत सर्व्वश पितापिता महश्चैव
स्थैवप्रपितामह॥ नरकस्याविमुच्यन्ते नीला
गांददतेतुयः॥ दधिक्षीरवहानद्योवर्त्तन्ते सर्व्व
त सदा॥ घृततैला प्रपद्यन्ते नवनीतस्यपर्व्व
ताः॥ हस्त्यश्वरथयानैनगंधर्वैरप्सरोगणैःस्तूयमा
नोतुयैचैवगवांलोकनिवासिनः॥ वर्षकोटिसह
स्राणिलोकेतिष्ठतिवारुणे अथमानुष्य मासा
तिकदाचित्कालपर्ययये। गोभिः समृद्धेचकुले
जायतेनात्रसंशयः॥ कृषिभागीवहुधनोदुर्भिक्ष
ञ्चनपश्यति॥ पुत्रपौत्रैःपरिवृतःश्रीमान्सर्व्वज
नाकुलः॥ दासीदासैश्चसंयुक्तोजायतेतत्रमानवः
सोपकरणनीलगवीपूजादिविधाय। अद्येत्यादि

पितामहप्रपितामह नरकस्थानविमुक्तिसार्वदि
क्कसार्व्वकालिकदधिक्षीरवहत्वजनदुपभोग वत्त्व
घृततैलत्वनवनीतपर्य्यंतप्राप्तित्वगंधर्व्वबह्वप्सरो
गणस्तूयमानत्वहस्त्यश्वरथयानकरणक गले क
निवासित्वनविगमनवर्षकोटि सहस्रावच्छिन्न
वारुणलोकावस्थानतदुत्तरत्वगवीसम्बद्धकुल
जन्मऋषिभागित्वत्वधनवत्त्वदुर्भिक्षादर्शनत्वपु
त्रपौत्रपरिवृतत्वश्रीमत्त्वसर्व्वजनाकुलत्व त्वदा
सौदासत्वकामदुघासुवर्णशृङ्गीरौप्यखुरामुक्ता
लाङ्गूलभूषितापट्टच्छन्नाभ्यन्ताद्दामालंकृता।प ञ्च
वर्णसूत्रवेष्टितग्रीवानीलवर्णीगोरुद्रदैवतामस्मै
कर्णेचायेत्यादि ० दक्षिणापुच्छग्रहणान्तं ॥
पूर्व्ववद्दानमिदरुद्रप्रतिमाग्रे ॥ ध्यानयोगि
संप्रदानकम्बेनगवोदाने ॥ श्वेतांगादद्दतेयस्तु
दिव्यरत्नैरलंकृतां घंटामालाकुलांकृत्वा। गन्ध
पुष्पैरलंकृता ॥ सुविधूप प्रदातव्या। हतेनास्य
न्वपूरयेत् ॥ सुवर्णशृङ्गाभरणातथारूप्यखुरा
शुभा ॥ पट्टच्छन्नाशुभाचैवदातव्याध्यानयोगि

ने ॥ यस्तु दद्याद्गाः श्वेतातस्यपुण्यफलंशृणु ॥
जन्मप्रभृतियत्पापमातृकं पैतृकं चयत् ॥ तत्सो
घृतस्यहस्तस्यतत्क्षणादेवनश्यति ॥ गान्दद्या
नोहदूत्येववाचापूयेतसर्व्वश ॥ पितापिता
महश्चैवतथैवप्रपितामहः ॥ नरकस्याविमुच्य
न्ते सोमलोकंव्रजन्तिते ॥ पुत्रपौत्रैः परिहृतागन्ध
र्व्वैश्चाप्सरोगणैः हृष्टतुष्टाप्रमुदितायनैश्चैवसु
शोभनैः ॥ मुक्तावैदूर्य्यसंपन्नैर्हंसयुक्तैर्मनोरमैः
सदाहृष्टाव्रजन्ये वैश्वेतागादददतेहये ॥ श्वेतोपक
रणश्वेतगवीपूजादिविधाय॥ अद्यजन्मप्रभृत्युत्प
न्नस्यायमातृकपैतृकपापक्षयपितृपितामहप्रपि
तामहनरकस्याविमुक्तितदीयसोमलोकगमन
पुत्रपौत्रवज्रगंधर्व्वबहूप्सरोगणपरिहृतत्वहृष्टतु
ष्टत्वप्रमुदितत्वमुक्तावैदूर्य्यसम्पन्नसुशोभनहंस
युक्तमनोनववज्रविमानकरणकसदाहृष्टात्मसो
मलोकगमनकामदृश्यादिव्यरत्नालङ्कृताघटामा
लाकुलागन्धपुष्पालंकृतादत्तमुखभूषाहृतपूरि
तास्यासुवर्णशृङ्गाभरणा रूप्यखुरापट्टच्छन्नाश्वे

तांगारुद्रदैवतामित्यादि० दक्षिणापुच्छग्रहणा न्तं॥ सं.प्रकरणागौरिगवीदाने॥ गौरीञ्चैवप्रय च्छेनयस्तुगावैपयस्विनीं॥ अहोरात्रोषित स्ना त्वाकृतशौचोनरः सदा॥ सुवर्णशृङ्गी गौरीप्यखुरां मुक्तालाङ्गूलभूषिता॥घन्टामालाकुलाचैवगंधपु ष्पैरलंकृता॥कृत्वापञ्च.सतैस्ताम्रदोहांसुविधूपं प्रदाप येत्॥ भक्ष्यभोज्यप्रदानेनब्राह्मणान् भोजयेद्धृता न्॥ गावोदानीदृत्येवंवाचापूयेतसर्व्वशः॥ मा द्व कं पैटकञ्चैवयच्चान्यद् दुष्कृतंभवेत्॥ पापञ्चत स्यतत्सर्व्वं दहत्यग्निरिवेन्धनं॥ वर्षकोटि सह स्रंतुपुमान्सदिवमोदते॥ दासीदासैरलङ्का रै स्तूयते सर्वजन्तुभि॥ अरोगश्चैवजायेतते जस्वीचभवेन्नर॥ गौरीपीतवर्णा॥ सोपक रणागौरीगवीपूजादिविधाय॥ अद्यामाद्धकपै द्धकदुष्कृतात्म हत्यापचय स्वर्गाधिकरणकव र्षकोटि सहस्रावच्छिन्नमोदन सर्वजन्तु कर्त्तृक दासीदासालङ्कार हेतुकस्तव्यत्वारोगित्व भवन कामदूमं।सुवर्णशृङ्ग गीरीप्यखुरा मुक्तालाङ्गूलभू

षिताम्बरा मालाकुला गंधपुष्पालंकृता कृत
पनिविष्टचरणा दत्तमुखधूपा गौरीगारुद्रदै
वतामित्यादि० दक्षिणापुच्छग्रहणान्तं ॥ अ
क्षरोपशमो धिकारी भक्ष्यभोज्यान्नपानेन ब्रा
ह्मणचयभोजनमग ॥ महाभारतीय रोहि
णीदाने ॥ रो हणीन्तुलम वत्साचधे नुन्दत्व पय
स्विनी ॥ सुव्रता वस्त्रसम्वीता सूर्यलोके महीय
ते ॥ रोहिणी लोहितवर्णा सुव्रता सुशी
ला ॥ स प्रकरणरोहिणीपूजादिविधाय ॥ अ
द्यसूर्य्यलोकमहितत्वकामइमा रोहिणीतुल्य
वत्साधेनु पयस्विनी सुव्रतांवस्त्रसंवीतागारुद्र
दैवतामित्यादि० दक्षिणापु च्छग्रहणान्तं ॥ स
मानवस श्वेतधेनदाने० समानवत्सा श्वेतान्तुधे
नुन्दत्व पयस्विनी ॥ सुव्रतावस्त्रसंवीतामिन्द्रलो
के महीयते॥समानवत्सासमानवर्णवत्सां॥ श्वेत
गवीपूजादिविधाय ॥अद्यइन्द्रलोकमहितत्वका
मइमासमानवत्सा श्वेतधेनुं पयस्विनी वस्त्रसंवी
तागारुद्रदैवतामित्यादि ॥ दक्षिणापुच्छग्रहणा

म्नं ॥ समानवत्सवत्सधेनुदाने ॥ समानव त्सायवत्साधेनुं दत्वा पयस्विनी ॥ सुव्रता वस्त्रस वीतां सोमलोके महीयते ॥ अद्य त्वा कर्त्तुरा० यवत्सगवीपूजादिविधाय ॥ अद्य सोमलोक महितत्व कामः इमां यवत्सां धेनुं पयस्विनीं सुव्रतां वस्त्रसंवीतां गां रुद्रदैवतामित्यादि० दक्षि णापुच्छग्रहणात् ॥ असवर्णधेनुगवीदाने वातरेण सवर्णान्तु सवत्सा कामदोहिनी ॥ प्रदा यवस्त्रसंवीतां वायुलोके महीयते ॥ वातरेणुसव र्णा धूसरवर्णा । धूसरधेनुगवीपूजादिवि य ॥ अद्य वायलोकमहितत्वकाम इमां वातरे णुसवर्णां सवत्सां कामदोहिनीं वस्त्रयुतां गां रु द्रदैवतामित्यादि० दक्षिणापुच्छग्रहणान्तं० स मानवर्णवत्सधूम्रवर्णधेनुदाने० समानवत्सांधू म्रातु दत्व धेनु पयस्विनी सुव्रता वस्त्रसंवीतां य मलोके महीयते ॥ धूम्रा कृष्णा लोहित वर्णा० धूम्रधेनुपूजादिविधाय० अद्य यमलोकमहित त्वकाम इमां समानवत्सां धेनुं पयस्विनीं सुव्रतां व

स्त्रसंवीता गारुद्रदैवता मित्यादि ॥ दक्षिणा पुच्छग्रहणान्त ० हेमसवर्णसवत्स धेनुदाने ॥ अम्रगा हेमसवर्णाञ्च सवत्सा कामदोहना ॥ प्रदायवस्त्र स वीता वारुण लोकमाप्नुयात् ॥ अम्रगागौ कामदोहना अनायासदोह्या ० सवत्सधेनु पूजादिविधाय ॥ अद्यवारुणलोकमहितत्वकामइमा हेमरुवर्णासवत्साकामदोहना वस्त्रसवीता धेनु गारुद्रदैवतामित्यादि॥ दक्षिणापुच्छ ग्रहणान्त ० हिरण्यवर्णसवत्सपिङ्गल गोदाने ०हिरण्यवर्णापिङ्गाक्षी सवत्सा कामदोहिनी॥ प्रदायवस्त्रस वीता कौवेरंलोकमश्नुते ॥ हिरण्यवर्णा दीप्तपीतवर्णा हिरण्यवर्णगवीपूजादिविधाय ॥ अद्यकौवेरलोक भोगप्राप्तिकामइमा हेमसवर्णा सवत्सा कामदोहनावस्त्रसंवीता धेनुं गारुद्रदैवतामित्यादि० दक्षिणापुच्छ ग्रहणान्तं॥ पलालधूम्रवर्णगोदाने पलालधूम्रवर्णान्तु सकामाकामदोहना प्रदायवस्त्र संवीतापितृलोकमश्नी

यते॥ पलाल धूसरवर्णा पाण्डुरा॥ पाण्डु
रधेनुगवीपूजादिविधाय॥ अद्यपितृलोकमहि
तत्वकामइमापलालधूसरवर्णा सवत्साकाम
दोहना वस्त्रसंवीता धेनुंगा रुद्रदैवतामि
त्यादि दक्षिणापुच्छग्रहणान्तं॥ सवत्सपीवर
गवीदाने॥ सवत्सापीवरीन्दत्वाशितिकण्ठी
मलङ्कता॥ वैश्वदेवसमंनावस्थानश्रेष्ठंप्रपद्य
ते पीवरींभूलदेश॥ शितिकण्ठी नीलग्रीवा
सुलकृताहेमतिलकादिभि॥ पीवरधेनुगवीपू
जादिविधायअद्यारभ्य देवासवाधश्रेष्ठस्थानप्रा
प्तिकामइमासवत्सा पीवरीं शितिकन्ठामल
कृताधेनुंगारुद्रदैवतामितयादि॥ दक्षिणापु
च्छग्रहणान्त॥ समानवत्सगौरवर्णधेनुदा
ने॥ समानवत्सागौरीन्तुधेनुदत्वापयस्विनी
सुव्रतावस्त्रसवीतावसूनालोकमश्नुयात्॥ गौर
वर्णधेनुपूजादिविधाय॥ अद्यवसुलोकभोगप्रा
प्तिकामइमासवत्साधेनुंगां रुद्रदैवतामितया
दि॥ दक्षिणापुच्छग्रहणान्त॥ याज्ञवल्कीयगो

दाने॥ यथाकथंचिद्दत्वा गां धेनुं वाधेनुमेव वा॥ अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते॥ यदा कथंचित् सुवर्णशृंगादिरहितामपि॥ गोपूजादि विधाय॥ अद्य स्वर्गलोकमहितत्वकाम इमाम रोगामपरिक्लिष्टां गां रुद्रदैवतामित्यादि॥ दक्षिणा पुच्छग्रहणान्त॥ नंदिपुराणीय धेनुदाने॥ विधिना तु यदा दद्यात् पात्रे धेनुं सदक्षिणां॥ न दातारयते जन्तून्कुलानामयुतै शतै अयुतैः शतैरिति सप्तम्यर्थे तृतीया॥ धेनुगवीपूजादि विधाय॥ अद्य कुलशतायुत सहितात्मतारणकाम इमां धेनुं गां रुद्रदैवतामित्यादि दक्षिणा पुच्छग्रहणान्तं॥ विष्णुक्तगोदाने॥ गोप्रदानेन स्वर्गमाप्नोति॥ अद्य स्वर्गप्राप्तिकाम इमां गां रुद्रदैवतामित्यादि॥ दक्षिणा पुच्छग्रहणान्तं॥ मनूक्तगोदाने॥ गोदो ब्रध्नस्य विष्टपम्॥ प्राप्नोतीति शेषः॥ पूजादि विधाय॥ अद्य ब्रध्नविष्टपप्राप्तिकाम इमां गां रुद्रदैवतामित्यादि॥ दक्षिणा पुच्छग्रहणान्त॥ नंदिपुराणीय संग्रामार्जित

पूर्व्वादिचतुर्द्दिक् प्रदक्षिणक्रमावस्थित क्षीरद
धिमधुसर्प्पिः पूर्णतैजसपात्रचतुष्टयसहितकृष्णा
जिनप्रजापतिदैवतमद्रुकगोत्रायाहिताग्नयेदेवा
सोयुग प्रच्छादित यामुकशर्म्मणेब्राह्मणायेत्या
दि ॥ दक्षिणापुच्छग्रहणान्तं ॥ वैशाख्यधिका
रेविष्णोक्तकृष्णाजिनदाने ॥ सुवर्णनाभकृत्वा
य सखुरकृष्णमाहुकम् ॥ तिलै प्रच्छादयेद्य
त्तस्यपुण्यफलशृणु ॥ ससमुद्रगुहातेनस
शैलवनकानना ॥ चतुरन्ताभवेद्दत्तापृथिवीन
चसशय ॥ पूजादिविधाय ॥ अद्यवैशाखपूर्णि
मायाससमुद्र गुहाकसशैलवनकाननचतु र
न्त पृथिवीदानजन्यफलसमफलप्राप्तिकामइद
सुवर्णनाभसखुरहितिलप्रच्छादितकृष्णाजिनं
प्रजापतिदैवतमित्यादि दक्षिणापुच्छग्रहणान्त
म् ॥ वैशाख्यधिकारेविष्णूक्तकृष्णाजिनदा
ने ॥ कृष्णाजिनेतिलान्कृत्वाहिरण्यं मधुसर्प्पि
षी ॥ ददातियस्तुविप्रायसर्व्वन्तरतिदुष्कृति

म् ॥ पूजादिविधाय ॥ अथ वैशाखपूर्णिमायां
सर्व्वदुष्कृततरणकामः द्दं हिरण्यमधुसर्प्पिस्ति
लयुक्तकृष्णाजिनं प्रजापतिदैवतमित्यादि ॥ द
क्षिणापुच्छग्रहणान्तं ॥ पुलस्त्योक्तकृष्णाजिन
दाने ॥ अथातः कृष्णाजिनदानविधिं व्याख्यास्या
मः ॥ कार्त्तिक्यां पौर्णमास्यां वैशाख्यां वा चन्द्र
सूर्य्यग्रहणे विषुवतोरयनयोर्व्वा कृष्णमृगाजि
नं सखुरं सशृङ्गं समवर्णं मनोहरं हिरण्यशृङ्गं रौ
प्यखुरं मुक्तालाङ्गूलभूषितमन्तर्व्वासवाहिन्यां स
माग्नीवेश्यात् ॥ गोमयेनोपलिप्तायां भुवि कुतप
विस्तीर्य्य तस्मिन्नाविकं वस्त्रं प्रसारयेत् ॥ कुत
पोनेपालकम्बलः ॥ कृशस्समुद्धृत्यैकैकं तस्मिन्न ज
नं हिरण्यनाभं कृत्वा तिलैः संछाद्य तद्रूपं कृत्वा
वस्त्रयुग्मेन तिलान् प्रच्छादयेत् ततश्चतसृषु
दिक्षु चत्वारि पात्राणि ताम्रकांस्यरौप्यसौवर्णा
नि यथाशक्तितः पूर्व्वस्यां दिशि क्षीरपूर्णं दक्षि
णस्यां दिशि दधिपूर्णं पश्चिमस्यां घृतपूर्णं उत्तर

स्या मौद्रपूर्णं निदध्यात् ॥ चतस्रश्च दिक्षु चत
स्रो गृष्टीर्न्निदध्यात् ॥ गृष्टि प्रथमप्रसूता गौ।
तत्पश्चिमभागे सुसमिद्धमग्निं कृत्वा परिसमुह्य प
र्युच्य परिस्तीर्य्य प्रागग्रैर्द्दर्भैर्म्महाव्याहृतिभि
स्तिलान् घृताक्तान् जुहुयात् ॥ ततश्चाहिताग्न
ये ब्राह्मणाय सर्व्वाङ्गसंपूर्णायपाठसंयुक्तायवा
सोयुगाच्छादिताय विदुषे कृष्णाजिनन्दद्यात् ॥
नाभिस्पृशन्नदितये कृष्णाजिनं प्रतिगृह्णामी
त्यसावापप्रतिग्रहं वाचयेत् ॥ अत्रयमगीतागा
थाभवति ॥ गोभूहिरण्यसंयुक्तं मार्गमेवं ददा
तिय ॥ सर्व्वंदुष्कृतकर्म्मापि सायुज्यं ब्रह्मणो
ब्रजेत् ॥ दानवाक्यानुसारेण कृष्णाजिनं दिर
वय्यदात कृष्णाजिनपश्चिमे सुसमिद्धमग्निमुप
समाधाय परिसमुह्य पर्युच्य प्रागग्रैर्द्दर्भैः परि
स्तीर्य्य महाव्याहृतिभिर्घृताक्तान् तिलान् जुहु
यात् ॥ देयद्रव्यपूजादिविधाय ॥ अद्यामुकस
मये सर्व्वदुष्कृतिक्षयब्रह्मसायुज्यावाप्तिकाम इ

दं गोमधोपलिप्तभूम्यास्तृत कुतपोपरिस्थापि
ताविकवस्त्रोपरिस्तृतसखुरस्रङ्गं गावर्णमनो
हरहिरण्मयशृङ्गं रौप्यखुरमुक्तालाङ्गूलभूषिता
न्तर्भागं सवल्लिहिर्मुग्रीवहिरण्यनाभ कृष्णा
जिनाकृतिवत्कुतिलप्रस्थादितवासोयुगाच्छादित
पूर्व्वदिगवस्थितगुडक्षीरपूर्णताम्रपात्रदक्षि
णादिगवस्थितदधिपूर्णकांस्यपात्रदक्षिणादिगव
स्थित दधिपूर्णकांस्यपात्रपश्चिमदिगवस्थित घृ
तपूर्णरौप्यपात्रोत्तरदिगवस्थित क्षौद्रपूर्णसौ
वर्णपात्रचतुर्द्दिगवस्थित गुडचतुष्टयंभूमियुत
कृष्णाजिनंप्रजापतिदैवतमाहिताग्नयेसर्व्वाङ्ग
पूर्णाय पाठसंयुक्तायवासोयुगयुक्तायविदुषेऽलं
कृतायामुकगोत्रायामुकशर्म्मणेब्राह्मणायतुभ्य
महंसंप्रददे ॥ सर्व्वगुणसंयुक्तं कृष्णाजिनंद
दानीत्युक्त्वानाभिंस्पृशेत् ततःप्रतिग्रहीताओं
स्वस्तीत्युक्त्वा अदितये कृष्णाजिनंप्रतिगृह्णामी
तिवदेत् ॥ ततोदक्षिणाभुक्त्यहरणान्तं ॥ दा

महागरे ॥ चतसृषु दिक्षु चत्वारि पात्राणि ता
म्ररौप्यसौवर्णानीति पठित्वा द्रव्यत्रयेण चत
सृणां दिशां चतुर्णां ताम्रादीनां यथासंख्यं स
म्बन्धासम्भवाच्च ताम्ररौप्यसौवर्णानामन्यतमद्र
व्यपात्रचतुष्टयस्य ग्रहणमत एव शक्तितइति मु
निराहेत्यभिहितं तस्मिन्पक्षे चतुर्दिक्षु ताम्र
रौप्यसौवर्णान्यतमपात्राणि साध्यदानवाक्ये
ताम्रादिपदस्थाने तत्पदप्रक्षेप इति विशेषः ॥
कालिकापुराणीयकृष्णाजिनदाने ॥ येचरु
क्षरादिपात्रे तु कृत्वा वह्निं ददन्तिये ॥ तिलद्रोण
समायुक्तं वस्त्रयुग्मादिवेष्टितं ॥ पर्णं वार्द्धस्था
र्द्धस्य क्षिभवाङ्गमसयुतम् ॥ कृष्णवस्त्रेणयुग्मे
नत्वन्येनाच्छादयेद्द्विजम् ॥ सोदकं चापरं च
कांस्यं तिलन्यस्य तत्करे ॥ ततः कृष्णाजिनं दद्या
त्तिलद्रोणान्वितं व्रतत् ॥ दत्वा तु भोजयेत्पश्चा
त्तांश्चैव विसर्जयेत् ॥ अयने विषुवे चैव चन्द्र
सूर्य्यग्रहे तथा ॥ युगादौ वा प्रयच्छन्ति विधिना

येतु वै द्विजे ॥ तपितत्पदमासाद्यदशासप्तप्रभा युषः ॥ क्रीडन्तिविविधैर्भोगैः कलारूपगुणा न्विता ॥ तत्पदं विष्णुपदमधिकारात् ॥ वा क्यानुसारेणकृष्णाजिनाद्यासादनं विधायसुव र्णरजतं कांस्यतामान्यतमपात्रे अग्नि मुपसमा धाय ओंप्रजापतयेस्वाहेतिहुत्वा द्विजकरेसाह तसतिलसुवर्णन्दत्वा सोपकरणकृष्णाजिनपू जादिविधाय ओंअद्यामुकनिमित्ते वैष्णवपद प्राप्तु त्तरब्रह्मायुर्दशा सप्तमयावच्छिन्नकला रूप वहुगुणान्वितविविधवहुभोगयुतात्मक्रीड नकाम इदंतिलद्रोणसमायुक्तंवस्त्रयुग्माभिवे ष्टितं सुवर्णपलमध्यसंयुक्तं कृष्णाजिनंविष्णु दैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणायस्व स्त्रवस्त्रयुगाच्छादिताय सोदकतिलसुवर्णगृह्ण स्वायेत्यादिदक्षिणापुच्छग्रहणान्तं ॥ त मस्तमेवब्राह्मणंभोजयित्वा प्रणिपत्यविसर्ज्ज येत् ॥ सुवर्णपलार्द्धसंयोजनपक्षेदानवाक्य

मत्वाऽर्घप्रक्षेप ॥ विभवहीनस्तु खल्पमपि हिर णं तिलद्रोणमध्ये विधायदद्यात् ॥ मूलवा क्येऽङ्कस्ते मध्यस्थमित्यर्थः ॥ तिलद्रोणदश कयुतकृष्णाजिनदाने ॥ तत्रचैकतिलद्रोण स्थाने तिलद्रोणदशकं निधायान्यत्सर्व्वंपूर्व्ववद् दासाद्यतद्दैववक्तुंहि तत्तथाविधमेवद्विजंविधा यतत्करेसोदकंसतिलंसुवर्णंकृत्वा पूजादिविधा य ॥ अद्यामुकनिमित्तेवैष्णवपदप्राप्त्युत्तरत्त त्तमपुराभिकरणकब्रह्माण्डभवकालाधिमोदन कामइदंतिलद्रोणदशकसमायुक्तं वस्त्रयुगाभि वेष्टितं सुवर्णपलमध्यसयुक्त कृष्णाजिनंविष्णु दैवतममुकगोत्रायेत्यादि ॥ दक्षिणाविसर्ज्ज नान्तं ॥ एकद्रोणविधिविधानानन्तरमनेन चविधानेनदशद्रोणप्रदायक ॥ आब्रह्माण्डभवं कालंमोदतेसपुरोत्तमे ॥ इत्यादिदर्शनात्सर्व्व मेतल्लभ्यते ॥ अथपयःपूर्णस्वर्णपद्मघटदाने ॥ घटञ्चपयसापूर्णंहेमपद्मनिवेशितं ॥ सम्पर्के

वस्त्रयुग्मे नदद्यात्सोपिमणेद्धृतं॥ वैष्णवपदमधि
कारात्॥ नकेवलपूर्व्वां त्कृष्णाजिनदद्यात्यपेर
र्थे ॥ पूजादिविधाय ॥ अद्यामुकसमयेवै
ष्णवपदगमनकामदूमपय पूर्णघटहेमपद्मनियो
जितंवस्त्रद्वयपूजितविष्णुदैवतमित्यादि दक्षि
णास्पर्शान्तं ॥ अथाग्नेयपुराणीयकृष्णाजिन
दाने ॥ अयनेविषुवेचैवसंक्रान्तौपर्व्वणीषु
च ॥ युगादौचयुगान्तेचद्वादश्यांनियत
शुचिः॥ ससुपोष्यसमभ्यर्च्यकेशवंकल्मषापह
म्॥ द्वादश्यांचचतुर्द्दश्यांकृष्णायांवैविशेष
त॥ संलिप्यगोमयेनाथचतुर्हस्तप्रमाणत ॥
वस्त्राणिप्रस्तयेद्भूम्यामजिनंतचचन्यसेत् ॥ कृ
ष्णैस्तिलैस्तुसञ्छन्नंकृत्वातस्योपरिन्यसेत् ॥
मधुसर्प्पिर्युतंपात्रहैमंचौदुम्बरन्तथा ॥ औ
दुम्बरंताम्रपात्र॥सौवर्णानि क्षिपेत्तचपलंवा
र्द्धपरार्द्धकम्॥ शक्तितोदानमेवंहिभक्तिरेवा
चकारयां॥संछाद्यतंशुभैर्व्वस्त्रैः कृष्णाजिनम

येषत ॥ कलशाष्टौतथादिव्यरुद्रसंख्या पात्रसं
युता ॥ तान्स्थापयाश्ववनंकृत्वाविधिनापूजयेत्क
शवम् ॥ कृष्णाजिनंसमभ्यर्च्य ब्राह्मणायंप्र
पादयेत ॥ आह्वनं होमंकृत्वेत्यर्थ ॥ कृष्णो
ऽसिचर्म्मणाकृष्णकृष्णाजिनमतस्तिलैः ॥ कृ
ष्णैर्युतंप्रतीछस्वकृष्ण संप्रीयतामिति ॥ एव
मुक्त्वाचतद्दत्वापश्चाद्द्यात्सुदक्षिणा ॥ तिला
हारोभवेत्तत्रब्राह्मणान्भोजयेत्तत ॥ ब्राह्मणा
न्भोजयित्वातिलाहारोभवेदित्यर्थ ॥ एवंकृ
ष्णाजिनंदत्वानरोविगतकल्मष ॥ पिताम
हान्समुद्धृत्यस्वर्गंयातिनसंशय ॥ तत्रभोगा
श्चिरंभुक्त्वापितृपैतामहैर्युता ॥ सनरोस्यप्र
भावाद्धियातिविष्णो परंपदं ॥ तत्रसमुपोष्य
दानपूर्व्वकालेऽग्निसुपसमाधायहुत्वाविधि व
त्केशवंसंपूज्य ॥ कृष्णोऽसिचर्म्मणाकृष्णकृ
ष्णाजिनमतस्तिलै ॥ कृष्णैर्युतंप्रतीछस्वकृ
ष्ण संप्रीयतामिति पठित्वा अद्यामुकसमये

गतकल्मषात्मकर्तृकवहुपितामह समुद्दरणपू र्व्वकस्वर्गगमन तधिकरणक बहुपिष्टपितामह युनात्मचिरवहुभोगभुक्ता न्तरविष्णुपदगमन काम इदंगोमयोपलिप्तचतुर्हस्तप्रमाणकभूम्या स्तीर्णवहुवस्त्रोपरिन्यस्तकृष्णातिलसंछन्नोपरि न्यस्तमधुसर्प्पियुतप्रस्थिमसुवर्णपलस्य दहवस्त्रा च्छादितफलसमफलप्राप्तिकाम इदंसुवर्णनाभ सखुरवहुतिनप्रच्छादितकृष्णाजिनं प्रजापति दैवतमित्यादि ॥ दक्षिणापुच्छग्रहणान्तं ॥ स्क न्दपुराणीयकृष्णाजिनदाने ॥ कृष्णाजिनन्तु गोदद्याद्व्रतिनेब्रह्मचारिणे पृथिवीफलमाप्नोति व्यागस्यास्यप्रवर्त्तते ॥ ससमुद्रगुहातेनसशैलवन कानना ॥ चतुरन्ताभवेद्दत्ता पृथिवीनात्र संशय ॥ पूजादिविनाय ॥ अद्यपृथि वीफलप्राप्तिसुयोगप्रवृत्ति ससमुद्रगुहासशैल वनकाननचतुरन्तपृथिवीदानफलसमफल प्रा प्तिकामइदं कृष्णाजिनंविष्णुदैवत मित्या

दि॥ दक्षिणापुच्छग्रहणान्तम्॥ अथभूमि
दान। तत्रमनु भूमिद सर्व्वमाप्नोतिराज्य
पुत्रधनादिषु॥ यद्यत्कामयतेसतत्प्राप्नोती
त्यर्थ॥ पूजांविधाय॥ अद्यामुकाभिवाञ्छित
फलकामइमामियत्संख्यांभूमिंप्रियदत्ता वि
ष्णुदैवताममुकगोत्रायेत्यादि। दक्षिणाभूमिप्र
दक्षिणान्तं॥ याज्ञवल्कोक्तभूमिदाने। भूमिप्रहृ
त्य दत्वास्वर्गेमहीयते॥ अद्यस्वर्गमहितत्वका
मइमामियत्संख्यांभूमिंप्रियदत्ताविष्णुदैवता
मित्यादि॥ दक्षिणाभूमिप्रदक्षिणान्त॥ इ
हवसिष्ठोक्तगोचर्म्मपरिमितमहीदाने॥ य
त्किञ्चित्कुरुतेपापंयस्मप्रभृतिमानव॥ अ
पिगोचर्म्ममात्रेणभूमिदानेनशुद्ध्यति॥ गवांश
तंवृषश्चैकोयत्रतिष्ठेदयन्त्रित॥ तद्धिगोचर्म्म
मात्रन्तुप्राहुर्व्वेदविदोजना॥ दशहस्तेनवं
शेनदशवंशात्समन्तत॥ पञ्चवाभ्यधिकन्दद्या
देतद्गोचर्म्मउच्यते॥ पञ्चवत्यधिकमितरे

कश्चिन्पार्श्वपञ्चवंशामविकम्बा॥ पूजादिविधाय॥ अद्याजन्मकृतसकलपापक्षयकामइमां गोचर्म्मपरिमित भूमिंप्रियदत्ताविष्णुदैवतामित्यादि॥ दक्षिणाभूमिप्रदक्षिणीकरणान्त॥ माघमृगशिरादधिकदानेप्यतद्देवफलं॥ समाक्षभूमिदाने॥ तथादत्वाक्षितिंविप्रेब्रह्मलोके महीयते॥ पूजादिविधाय अद्यब्रह्मलोकमहितत्वकामइमामियत्संख्याभूमिंप्रियदत्ताविष्णुदैवतामित्यादि॥ दक्षिणाभूमिप्रदक्षिणीकरणान्त॥ आदित्यपुराणीयगोचर्म्ममात्रवसुन्धरादाने॥ यस्तुगोचर्म्ममात्रम्बैप्रयच्छतिवसुन्धराम्॥ विमुक्तःसर्व्वपापेभ्योविष्णुलोकंसगच्छति॥ पूजादिविधाय॥ अद्यसर्व्वपापविनिर्मुक्तिविष्णुलोकगमनकामइमांगोचर्म्मपरिमितांभूमिंप्रियदत्तांविष्णुदैवतामित्यादि॥ दक्षिणाभूप्रदक्षिणीकरणान्तम्॥ अथगवांप्रतमित्यादि गोचर्म्मपरिभाषापूर्व्वं लिखितैव

बोद्धव्या ॥ बृहस्पत्युक्तभूमिदाने ॥ षष्टिवर्षस हस्राणिस्वर्गेतिष्ठतिभूमिद पूजादिविधाय ॥ अद्यषष्टिवर्षसहस्रावच्छिन्न स्वर्गाधिकरणकवा सकामइमामियतसंख्याभूमिंप्रियदत्तां विष्णु दैवतामित्यादि ॥ दक्षिणाभूमिप्रदक्षिणीकर णान्तम् ॥ स्कन्दपुराणीयभूमिदाने ॥ यस्तु भूमिंप्रयच्छेत ब्राह्मणायमहात्मने ॥ ससर्व्व लोकेषु सुखीविमानेनसुवर्चसा ॥ बहून्यब्द शहस्राणिचरतेकामरूपवान् ॥ यदिमानुष्य मायातिनर कालविपर्य्ययात् ॥ तत्कामदु घातस्य महीभवतिसर्वत ॥ महात्मने शुभ चत्ताय पूजादिविधाय ॥ अद्यसर्व्वलोकाधि करणकसुखित्वबह्वब्दसहस्रावच्छिन्नसुतेजसक विमानकरणक कामरूपवदात्मीय चिरस्य मनुष्यजन्मोत्तर सर्व्वत कामदुघमहीप्राप्ति कामइमामियत्सख्या भूमिं प्रियदत्तां विष्णु दैवतामित्यादि ॥ दक्षिणाभूप्रदक्षिणी कर

णान्तम् ॥ शिवपुराणीयभूमिदाने ॥ पूजा
दिविधाय ॥ अद्यशिवपुरगमनपूर्व्वक हर्षव
दात्मीय कल्पायुतसहस्रसंख्याकचतुर्दशसह
स्रावच्छिन्न यथासुखशिवपुरवासे तत्पुरवरनि
वरणान्तर महीतलप्राप्तिपूर्व्वक श्रेष्ठवर्ण्य जन्म
परमसुखयुतत्वकामइमामियत् संख्याभूमिंप्रि
यदत्ता विष्णुदैवतामित्यादि दक्षिणाभूमिप्र
दक्षिणान्तम् मूलवाक्यं हिरण्यदानप्रकरणे
लिखितमेव ॥ नरसिंहपुराणीयभूमिदाने ॥
भूमिदानेनशुद्धेनलभतेशान्तिकंपरम् ॥ शुद्धेन
न्यायोपात्तविषयेन ॥ शान्तिकंदिव्यान्तरिक्ष
भौमोत्पादिप्रशमनम् ॥ पूजादिविधाय ॥ अ
द्यामुकोत्पातसूचितदोष प्रशमनकामइमामि
यत्सङ्ख्या भूमि प्रियदत्ता विष्णुदैवतामित्या
दि ॥ दक्षिणाभूप्रदक्षिणान्तं ॥ महाभारती
यभूमिदाने ॥ भूमिंतुदत्वासाधुभ्यो विन्दते
भूमिमुत्तमां । प्रेत्यचेहचधर्मात्मा सम्प्राप्नो

तिमहृयश्च पूजादिविधाय ॥ अद्येत्यन्तमुक्त्वा
भैष्मिकामुष्मिकधर्मात्मकत्वमहृायश्च ग्रामिका
मट्माभियत्संख्याभूमिप्रियदत्ताविष्णुदैवता
मित्यादि ॥ दक्षिणाभूमिप्रदक्षिणान्त ॥ इह
सत्युक्तभूमिदाने ॥ श्रोत्रियायकुलीनाय वि
नीतायतपस्विने । गृहस्थायदरिद्राय सर्व्वभूत
हितायच ॥ ईदृशायशुभाशुद्धा दत्ताखल्यापि
वासर ॥ कुलानान्तारयेद्वीर सप्तसप्तचसप्त
च ॥ शुभाशुभश्रयोत्पत्ति योग्यताश्रद्धान्यायो
पात्ता ॥ पूजादिविधाय ॥ अद्यैकविशन्सिख्य
खकुलतरणकामइमामियन् संख्याशुभाशुद्धा
भूमि प्रियदत्ताविष्णुदैवतामित्यादि । दक्षि
णाभूमिप्रदक्षिणान्तं विष्णुधर्म्मीयभूमिदाने
सुवर्णदानंगोदानं पृथिवीदानमेव च । एतत
प्रयच्छमानाहि सर्व्वपापैःप्रमुच्यते । पूजादिवि
धाय ॥ अद्यसर्व्वपापविनिर्मुक्ति कामइमामि
यत्संख्याभूमि प्रियदत्तां विष्णुदैवतामित्या

दि॥ दक्षिणाभूमिप्रदक्षिणान्त॥ आहिता
ग्निसंप्रदानकभूमिदाने॥ आदित्याइवदीप्य
न्ते तेजसादिविमान्नराः॥ येप्रयच्छन्तिवसुधां
ब्राह्मणायाहिताग्नये॥ पूजादिविधाय॥ अ
द्यस्वर्गाधिकरणकादित्य तुल्यतेजो दीप्यमान
कामइमामियत्सख्या भूमिंप्रियदत्ताविष्णु दै
वतामित्यादि॥ दक्षिणाप्रदक्षिणान्त स्कन्दपु
राणीयभूमिदाने॥ भूमिंवाय'प्रयच्छेत सराजा
भुविजायते॥ पूजादिविधाय॥ अद्यमूर्ध्यधि
करणकराजत्वभवनकाम इमामियत्सख्यां
भूमिं प्रियदत्तां विष्णु दैवतामित्यादि॥ द
क्षिणाभूमिप्रदक्षिणान्त॥ वृहस्पत्युक्त फा
लकृष्टसवीजसस्यशालिमहीदाने॥ फाल
कृष्टां महीन्दत्वासवीजां सस्यशालिनीं॥
यावत्सूर्य्यकृतालोकास्तावत्स्वर्गेमहीयते॥ स
वीजासुप्रवीजा सस्यशालिनी निष्पन्नसस्य
युक्ता. एकदेशएवतथा भूतामितिसागरः॥

पूजादिविधाय॥ अद्य सूर्यच्छतालोक समया
च्छिन्नस्वर्गमहितत्वकाम इमामियत्संख्यका
फाल कृष्णा सवीजा सस्यशालिनीं भूमिं वि
ष्णुदैवतामित्यादि॥ दक्षिणाप्रदक्षिणान्तं॥
तथेक्षसन्तत यवगोधूमशालिमहीदाने॥इक्षु
भि सन्तताभूमि यवगोधूमशालिनीं योददा
ति सुरश्रेष्ठ पुनरावर्त्ततेनसः॥ पूजादिविधाय
अद्यपुनरावृत्तिकामइमामियत्सख्यकामिक्षु
संतता यवगोधूमशालिनींभूमिं प्रियदत्ताधि
ष्णुदैवतामित्यादि ॥ दक्षिणाभूप्रदक्षिणा
न्तं॥ निष्पन्नसस्ययुक्तभूमिदाने ॥ महींस्फीं
तान्ददद्राजन् सर्व्वकामगुणैर्युताम॥ राजा
धिराजोभवतितद्विदानमनुत्तमम्॥ स्फीतां
निष्पन्नसस्ययुर्व्वा सर्व्वकामगुणान्विता॥ पू
जादिविधाय॥ अद्यराजराजत्व भवनकामइ
मामियत्संख्या स्फीता सर्व्वकामगुणान्वितां
भूमिं प्रियदत्तां विष्णु दैवतामित्यादि

दक्षिणाभूप्रदक्षिणान्त ॥ क्षेत्रभूमिदाने ॥ क्षेत्रभूमिं ददद्विप्रेषु श्रियमवाप्नुयात् ॥ क्षेत्र भूमिं धान्याद्युत्पत्तिभूमिं ॥ पूजादिविधाय अद्यपुत्रश्रीप्राप्तिकाम इमामिदन्तस्य भूमिं प्रियदत्ता विष्णुदैवतामित्यादि ॥ दक्षिणाभूप्र दक्षिणान्तं ॥ वास्तुभूम्यादिदाने ॥ निवेशना नाच्चैत्राणां वसतीनाञ्च भारत ॥ दातार प्रार्थितानाञ्च पुरुषा स्वर्गगामिन ॥ निवेश नानावास्तुभुवा वसतीना ग्रामाणा दातव्य त्वापेक्षया ॥ अद्यस्वर्गगमनकाम इमानिवेश नभूमिं प्रियदत्ता विष्णुदैवतामित्यादि ॥ दक्षिणाभूमिप्रदक्षिणान्तं ॥ भूमिदाने ॥ चित्रगुप्तवाक्यं ॥ क्षितिप्रदोद्विजातिभ्यो ऽयं यातुत्रिपिष्टपम् ॥ तत्रैवतीष्ठतावीरो ब्रह्म लोकेसहानुग ॥ विविधै कामभोगैस्तु सेव्य मानोनरोत्तम ॥ पूजादिविधाय ॥ अद्यत्रिपि ष्टपगमनतदधिकरण कविविधकामभोगसेव्य

मानसत्वानुगात्मीयानधिकाल ब्रह्मलोकवास कामइमामिमां संख्याभूमिं प्रियदत्ता विष्णु दैवतामित्यादि ॥ दक्षिणाभूप्रदक्षिणान्तं ॥ आरामभूमिदाने ॥ आरामभूमिन्दत्वातुमारुतलोकमश्नुते ॥ पूजादिविधाय ॥ अद्यमारुतलोकप्राप्तिकामइमामारामभूमिं प्रियदत्ता विष्णुदैवतामित्यादि ॥ दक्षिणाभूमिप्रदक्षिणान्तं ॥ आरामोग्रामसमीपस्थ सजातीयतरुसमूह ॥ जलाशयकरणार्थभूमिदाने ॥ जलाशयार्थं योदद्याद्वारुणंलोकमाप्नुयात् ॥ भूमिमितिशेष ॥ पूजादिविधाय ॥ अद्य वारुणलोकप्राप्तिकाम इमांजलाशयार्थां भूमिप्रियदत्तांविष्णुदैवतामित्यादि ॥ दक्षिणाभूप्रदक्षिणान्त ॥ देववेश्मकरणार्थभूमिदाने ॥ दत्वाचदेववेश्मार्थं तस्यदेवस्यसोश्नुते । यत्कर्माविद्यतेनित्यं लोकंद्विजवराट्ध्रुवम् ॥ भूमिर्मितिशेष योदेवस्तत्रएतवेश्मनिस्थास्यति

तस्य देवस्य लोकं नित्यमनवच्छिन्नकालं तद्भूमिदाता प्राप्नोतीत्यर्थः। पूजादिविधाय॥ अद्य कर्त्तव्ये तद्भूमिदेव वेश्मस्थापनीयामुकदेव लोकनित्यप्राप्तिकामो अमुकदेववेश्मकरणार्थमिमां भूमिं प्रियदत्ता विष्णुदैवतामित्यादि॥ दक्षिणा। उद्यानार्थभूमिदाने॥ उद्यानभूमिं दत्वा तु गन्धर्वैः सह मोदते। पूजादिविधाय॥ अद्य बहुगन्धर्वैः सह मोदन इमामुद्यानभूमिं प्रियदत्ता विष्णुदैवतामित्यादि॥ दक्षिणा भूमि प्रदक्षिणान्त उद्यानं नानाजातीयतरुसमूहः॥ गृहकरणार्थभूमिदाने॥ गृहभूमिं नरो दत्वा वसुनालोकमाप्नुयात्॥ पूजादिविधाय॥ अद्य वसुलोकप्राप्तिकाम इमां गृहभूमिं प्रियदत्ता विष्णुदैवतामित्यादि॥ दक्षिणा भूप्रदक्षिणान्तम्॥ शाकोत्पत्तिभूमिदाने॥ शाकभूमिं नरो दत्वा लोकञ्चाङ्गिरसो भवेत्॥ पूजादिविधाय॥ अद्याङ्गिरसलोकप्राप्तिकाम इमां शाकभूमिं प्रिय

दत्ताविष्णुदैवतामित्यादि॥दक्षिणाभूप्रदक्षिणान्तं॥मुद्गादिसस्योत्पत्तिभूमिदाने॥शिभिसस्यपरीक्षार्थं भुवदत्वानरोत्तम। साध्यानालोकमाप्नोति नात्रकार्याविचारणा॥ पूजादिविधाय॥ अथसाध्यलोकप्राप्तिकामाशिम्बिसस्योत्पत्तिभुव प्रियदत्ता विष्णुदैवतामित्यादि॥ दक्षिणाभूमिप्रदक्षिणान्तम्॥ शूकधान्यभूमिदाने॥ शूकधान्यभुवंदत्वा रुद्रलोकेमहीयते॥ पूजादिविधाय॥ अद्यरुद्रलोकमहितत्वकामइमाशूकधान्यभुव प्रियदत्ता विष्णुदैवतामित्यादि॥ दक्षिणभूमिप्रदक्षिणान्तं॥ इक्षुभूमिदाने॥इक्षुभूमिंनरोदत्वाद्राक्षाभूमिमथापिवा। सोमलोकमवाप्नोति सर्व्वकामांश्चविन्दति॥ पूजादिविधाय॥ अद्यसोमलोकावाप्ति सर्व्वलाभ काम इमामिक्षुप्रत्तिभूमिं प्रियदत्ताविष्णुदैवतामित्यादि॥ दक्षिणाप्रदक्षिणान्तं॥ द्राक्षाभूमिदानेप्येत

देवफलम् ॥ केदारभूमिदाने ॥ केदारभूमिं धर्म्मीय प्रयच्छतिधर्म्मित ॥ समहत्पुण्यमाप्नोतिब्रह्मलोकञ्चगच्छति ॥ पूजादिविधाय ॥ अद्य महापुण्यप्राप्तिपूर्वक ब्रह्मलोकगमनकामइमां केदारभूमि प्रियदत्ता विष्णुदैवतामित्यादि दक्षिणाभूमिप्रदक्षिणान्त ॥ केदार क्षेत्र ॥ पक्वसस्ययुक्तालक्कतमहीदाने ॥ पक्कसस्यावसुमती योलङ्कत्यप्रयच्छति ॥ पूजादिविधाय ॥ अद्यकामगविमानकरणक ब्रह्मलोकगमन काम इमापक्वसस्यालङ्कता भूमि प्रियदत्ता विष्णुदैवतामित्यादि ॥ दक्षिणा भूमि प्रदक्षिणान्तं ॥ क्रीतभूमिदाने ॥ भूमिं क्रत्वा तुय कुर्य्याद्दैवब्राह्मणसान्नर ॥ स्वर्गलोकमवाप्नोति पुरुषोतिमुदारुण ॥ अतिमुदारुणोतिनृशंसोपीत्यर्थं ॥ तेन पापक्षयोपिफलं । पूजादिविधाय ॥ अद्यपापक्षयस्वर्ग लोकावाप्तिकामइमाक्रीतभूमिं प्रियदत्ता विष्णुदैव

तामित्यादि ॥ दक्षिणाभूमिप्रदक्षिणान्त ॥ इहस्त्युक्तभूमिदाने ॥ यत्किञ्चित् कुरुतेपापं पुरुषोलोभमोहित ॥ तत्सर्वभूमिदानेन क्षिप्रमेवविनश्यति ॥ पुत्रादिविधाय ॥ अद्य लोभमोहितात्मकत्वसर्वपापक्षयप्रनाशकामइमा मियत्सस्यकाभूमिं प्रियदत्ता विष्णुदैवता मितयादि ॥ दक्षिणाभूमिप्रदक्षिणान्त ॥ नन्दिपुराणीयग्रामभूमिदाने ॥ दत्वातुभूमिं पुरुष सास्यासस्यदायिनीं ॥ सुसेवारम्य संस्थाना फलवृक्षमनोरमा॥ अभूववामनाधारा पात्रे वहुगुणान्विते॥ अप्येकपुरुषाधारादत्वाभूमिंमहामति ॥ दशकल्पानिवसति स्वर्गे विगतपातक ॥ साश्रयाविश्रामोचितस्थानसहिताः॥ सुसेवासुगमां एकपुरुषाधारा एक पुरुषभरणयोग्यामधि॥ पुत्रादिविधायः अद्य पापक्षयपूर्वकामुक ग्रामभूम्यादाय भरणयो ग्यपुरुषसमसख्यदशकल्पावच्छिन्न स्वर्गवासपा

भिकामो ऽमुकनामग्रामभूमिं साश्वयासस्यो

त्पति योग्यारम्यसस्थाना वृत्तफलमनोरमा

प्रियदत्ता विष्णुदैवताभित्यादि ॥ दक्षिणा

ग्रामप्रदक्षिणान्त ॥ यथोक्तविशेषणवतीग्राम

भूमिरेवभवति ॥ एकपुरुषभरणयोग्या च

भूमिरेषसम्वत्सरमेक पर्य्यन्तमेक पुरुषवर्त्तन

क्षमसस्योत्पत्तियोग्या ॥ तदुक्तं एकोश्नीयाद्य

दुत्पन्नानर स्सम्वत्सर फल ॥ गोचर्ममात्रासा

ज्ञाणीस्त।त्रायायदिवावहुर्भिरिति दहुपुरुषतृ-

प्तियोग्या फलभोगेतिवोद्धव्यमितिसारसादि

ति ॥ यथोक्तनगरदाने ॥ नगरञ्चतथादत्वा

राजाभवतिभूतले। पूजादिविधाय ॥ अद्य

भूतलाधिकरणकराज त्वभवनकामइदनगर

विष्णुदैवतमित्यादि ॥ दक्षिणानगर प्रदक्षि

णान्त ॥ अथ प्रजापतिदैवतशस्यदाने ॥ तत्र

धान्यदाने ॥ मनु धान्यद शाश्वत शौख्य

प्राप्नोतीति शेष पूजादिविधाय ॥ अद्य शा

श्वत सौख्य प्राप्ति काम एतानि धान्यानि प्र
जापतिदैवतानीत्यादि दक्षिणाधान्यस्पर्शान्तं
स्कन्दपुराणीयधान्यदाने ॥ ओषधीर्य्य प्रय
च्छेत धान्यानिविविधानिच ॥ सर्व्वकामसमृ-
द्ध स सोमलोकमश्नुते ॥ तत्रवर्षसहस्राणि
सप्तस्थित्वापुनर्न्नर ॥ इहैवसधनोपेत भो
गवानाभिजायते। ओषधयोमुद्गा धान्या
नि विविधानि पूजादिविधाय ॥ अद्यसर्व्वकाम
समृद्धिमदात्मोदसोमलोकोप भोगसप्तवर्ष स
हस्रावच्छिन्नै त ल्लोकावस्थानपूर्व्वकमर्त्यलोका
धिकरणकसर्व्वधनोपेतभोगवज्जन्मकाम एता
निधान्यानिप्रजापतिदैवतानीत्यादि॥ दक्षिणा
मुष्टिग्रहणान्त ॥ मुद्गान्यतमौषधिदानेप्येत
देवफल ॥ याज्ञवल्क्यात्तधान्यदाने ॥ धान्यं
प्रसृत्य ॥ दत्वात्यन्तं सुखीभवेत् ॥ पूजादि
विधाय ॥ अद्यात्यन्तसुखित्वभवनकामएतानि
धान्यानि प्रजापतिदैवतानीत्यादि ॥ दक्षिणा

मुष्टिग्रहणान्तं ॥ विष्णुधर्म्मोत्तरे रक्तशालि दाने ॥ रक्तशालिं नरो दत्त्वा सूर्य्यलोके महीयते ॥ पूजादिविधाय ॥ अद्य सूर्य्यलोकप्राप्तिकामः इमं रक्तशालिं प्रजापतिदैवतमित्यादि । दक्षिणा मुष्टिग्रहणान्तं ॥ सुगन्धिशालिदाने ॥ दत्त्वा तथा सुगन्धींश्च गन्धर्वैः सह मोदते शालीनीति शेषः ॥ पूजादिविधाय ॥ अद्य बहुगन्धर्व्वसहमोदनकामः एतान् सुगन्धिशालीन् प्रजापतिदैवतानित्यादि ॥ दक्षिणा मुष्टिग्रहणान्तं ॥ कलमदाने ॥ कलमानां प्रदानेन सोमलोके महीयते ॥ पूजादिविधाय ॥ अद्य सोमलोकमहितत्वकाम एतान् कलमान् प्रजापतिदैवतानित्यादि ॥ दक्षिणान्तं ॥ काष्ठशालिदाने ॥ काष्ठशालिं नरो दत्त्वा अलकायां प्रमोदते ॥ पूजादिविधाय ॥ अद्यालकाधिकरणककामो इमं काष्ठशालिं प्रजापतिदैवतमित्यादि ॥ दक्षिणा मुष्टिग्रहणान्तं ॥

बहुव्रीहिदाने ॥ व्रीहीणाञ्चाप्रमाणाना दा नात्स्वर्गमवाप्नुयात्। व्रीहय शारदाशुधान्यानि अप्रमाणाना बहूना पूजादिविधाय ॥ अद्यबहुलोकप्राप्तिकाम एतान् व्रीहीन् प्रजापतिदैवतानित्यादि ॥ दक्षिणामुष्टिग्रहणान्त यवदाने ॥ यवप्रदानेननर शक्रलोकेमहीयते ॥ पूजादिविधाय ॥ अद्यशक्रलोकमहितत्वकाम एतान् यवान् प्रजापतिदैवतानित्यादि ॥ दक्षिणान्त ॥ गोधूमदाने ॥ तथागोधूमदानेन वसूनालोकमाप्नुयात् ॥ पूजादिविधाय ॥ अद्यवसुलोकप्राप्तिकाम एतान् गोधूमान् प्रजापति दैवतानित्यादि ॥ दक्षिणामुष्टिग्रहणान्त ॥ प्रियङ्गुदाने ॥ प्रियोभवतिलोकस्य प्रियङ्गूय प्रयच्छति ॥ पूजादिविधाय। अद्यलोकस्यप्रियत्व भवनकामएता प्रियङ्गू प्रजापतिदैवतानित्यादि ॥ दक्षिणामुष्टिग्रहणान्त॥ प्रियङ्गू कङ्गु ॥ श्यामाकदाने ॥

ददातियस्तुश्यामाकं प्रीयंतेतस्यदेवता ॥ पूजादिविधाय ॥ अद्यदेवताप्रियकाम एतान् श्यामाकान् प्रजापतिदैवतानित्यादि ॥ दक्षिणामुष्टिगृहणान्तं ॥ नीवारादिशूकधान्यदाने ॥ अन्येषाशूकधान्यानां प्रदाननिरतोनर । स्वर्गलोकमवाप्नोति नात्रकार्य्याविचारणा ॥ अन्येषा नीवारादीन ।पूजादिविधाय। अद्यस्वर्गलोकप्राप्तिकामएतान्नीवारान्प्रजापतिदैवतानित्यादि ॥ दक्षिणामुष्टिगृहणान्त ॥ माषदाने ॥ यमलोकन्तु माषद प्राप्नोतीति सम्बध ॥ पूजादिविधाय ॥ अद्ययमलोकप्राप्तिकामएतान् माषान् प्रजापति दैवतानित्यादि ॥ दक्षिणामुष्टिग्रहणान्त ॥ मुद्गदाने । मुद्गद. शक्रलोकन्तु लभतेतिशेष ॥ पूजादिविधाय॥ अद्यशक्रलोकप्राप्तिकामएतान मुद्गान् प्रजापतिदैवतानित्यादि ॥ दक्षिणामुष्टिग्रहणान्त ॥ कलायदाने॥ सतीनचणकेद

त्वाद्दारुणलोकमाप्नुयात्॥सतीनकं कलाय॥
पूजादिविधाय॥ अद्यवारुणलोकप्राप्तिकाम
एतान् कलायान् प्रजापति दैवतानित्यादि।
दक्षिणामुष्टिग्रहणान्तं चणकदानेप्येतदेवफ
लम्॥ चणकोरहिले तिप्रसिद्ध॥ मसूरदाने।
वारुन्तु मसूराणि राजमाषाभिधानदम्
दत्वाप्राप्नोतीतिशेष॥ अद्यवायव्यलोकप्राप्ति
कामएतान्मसूरान्प्रजापतिदैवतानित्यादि।
दक्षिणामुष्टिग्रहणान्त॥ राजमाषदाने।
पूजादिविधाय॥ अद्यचन्द्रलोकप्राप्तिकामए
तान्राजमाषान्प्रजापतिदैवतानित्यादि॥ द
क्षिणामुष्टिग्रहणान्त॥ सर्षपादिदाने॥ अ
न्येषांशिल्पिधान्यानांप्रदानात्स्वर्गमाप्नुयात्।
अन्येषामनुक्तानां सर्षपादीनां पूजादिविधा
य॥ अद्यस्वर्गलोकप्राप्तिकामएतान् सर्षपान्
प्रजापतिदैवतानितग्रादि॥ दक्षिणामुष्टिग्रह
णान्तं॥ याज्ञवल्कीयतिलदाने॥ तिलान

प्रस्तुत्य देवलोके महीयते॥ पूजादिविधाय॥ अद्यस्वर्गलोकमहितत्वकाम एतान् तिलान सोमदैवतानित्यादि॥ दक्षिणामुष्टिग्रहणान्तं यमोक्ततिलदाने॥ तिलप्रद प्रजामिष्टा पुत्र य पशुविन्दति॥ पूजादिविधाय॥ अद्याभिमत प्रजाप्राप्तिकाम एतान् तिलान् सोमदैवतानि त्यादि॥ दक्षिणामुष्टिग्रहणान्त॥ माघेतिल दाने॥ माघेमासविशेषेण॥ पूजादिविधाय अद्यमाघमासीयामुकतिथौ इष्टप्राप्तिकाम एतान् तिलान् सोमदैवतानित्यादि॥ दक्षिणा मुष्टिग्रहणान्त॥ माघेकृष्णपक्षे तिलदानम्॥ तत्तमिस्रे विशेषत॥ पूजादिविधाय॥ अद्य माघकृष्णामुकतिथौ इष्टतमप्राप्तिकाम एतान् तिलानसोमदैवतानित्यादि॥ दक्षिणामुष्टिग्र हणान्त॥ विष्णुधर्मे तिलदाने॥ तिलानादाता इत्यधिकृत्य तेजस्विनोभिजायन्ते भोगिनश्चि रजीविन॥ पूजादिविधाय॥ अद्यभोगित्वते

लिखित चिरजीवित्वभवनकाम एतान् तिला
न् सोमदैवदानित्यादि ॥ दक्षिणामुष्टिग्रहणा
न्त वराहपुराणीयतिलदाने ॥ तिलानामधि
कृत्यब्राह्मणेभ्य प्रयच्छन्तिनगच्छन्तिदमालयम्
पूजादिविधाय ॥ अद्यमयगृहानुपसर्पणकाम
एतास्तिलान्सोमदैवतानित्यादि ॥ दक्षिणा
मुष्टिग्रहणान्तं॥आग्नेयपुष्यादिषुतिलदाने ।
पूजादिविधाय ॥ अद्यभैरवमार्गप्रापकाशेषपाप
क्षयकामएतास्तिलान् सोमदैवतानित्यादि ।
दक्षिणामुष्टिग्रहणान्तं ॥ कुलवाक्य हेमदाने
लिखित ॥ ब्रह्मपुराणीयतिलदाने ॥ इतिला
स्तिलधेनुञ्चकृतधेनुमथापिवा। श्रोत्रियेभ्य प्र
यच्छन्ति विप्रेभ्य श्रद्धयान्वित ॥ सोममण्डलस
काशैर्य्यानैस्ते यान्तिनिर्मलै ॥ गन्धर्वै रुपगीय
न्त पुरवैवस्वतस्य च ॥ विप्रेभ्य इतिवहुवचन
दात्रवहुत्वापेक्ष ॥ पूजादिविधाय ॥ अद्यसोम
मण्डलसकाशनिर्मलवहुयानकरणकवहुः भ्य

र्व्वोपगीयमानान्मोदन्वैवस्वतपुरगमनकाम ए
तास्तिलान् सोमदैवतानित्यादि ॥ दक्षिणामु
द्दिश्यक्षणान्त ॥ अथधर्म्मोक्ततिलराशिदानं ॥
सर्व्वपातकसयात कार्त्तीवाप्यकामत । शु
द्धिन्तस्यप्रयच्छामि स्वर्गमाधनरूवच ॥ शुक्रे
कृष्णे समे स्निग्धे द्रोविशद्गुलोच्छ्रिते ॥ रा
शिस्तिले समेदेशे कर्त्तव्य पुरुषायत । प्रति
माष्टागुलोत्सेध्यासौवर्णी विभवे सति ॥ क्षौ
द्रेणपयसादध्नाघृतेनापूरयनघट । यथाविभव
विस्तार ब्राह्मणेभ्यो निवेदयेत् ॥ दद्यान्माघेथ
वैशाखे विषुवेचोत्तरायणे । यावज्जीवकृतपा
पं तत्क्षणादेवनश्यति ॥ वाक्यानुसारेणतिल
राशिंविरचय्य ॥ पूजादिविधाय ॥ अद्यामुकमा
सीयामुकनिमित्ते यावज्जीवकामाकामकृतपा
पक्षयस्वर्गप्राप्तिकामइदंसमीकृतभूभागंसुपरि
माणायतद्वाविशद्गुलोच्छ्रित मधुदधिघृतदुग्ध
पूर्णघटचतुष्टय सहितंतदुपरिविन्यस्तसौवर्णी

ष्टाङ्गुलिकृतिप्रतिमसमस्निग्धभागमिलितशुक्ल कृष्णतिलराशि प्रजापतिदैवतमित्यादि ॥ दक्षिणामुष्टिग्रहणान्त ॥ असंपत्तावन्येनापि तैजसद्रव्येणप्रतिमाकार्या ॥ अथप्रजापति दैवतान्नदान ॥ तच्चब्रह्मपुराणे ॥ अन्नस्य हिप्रदानेन स्वर्गमाप्नोतिमानव । पूजादिविधाय ॥ अद्यस्वर्गप्राप्तिकामइदमन्नप्रजापतिदैवतमित्यादि ॥ दक्षिणास्पर्शान्तं ॥ तथैवान्नदाने ॥ अन्नस्यहिप्रदानेन नरोजातिपरांगतिम् सर्व्वकामसमायुक्तः प्रेत्यचाप्यशुभेशुभं ॥ पूजादिविधाय ॥ अद्यपरमगतिप्राप्तिकाम सम न्वितत्व प्रायशोत्तरशुभावाप्तिकामइममन्नप्रजापतिदैवतमित्यादि ॥ तथान्नदाने ॥ अन्नदस्यमनुष्यस्य बलमोजोयशांसिच । कीर्त्तिश्च वर्द्धतेशश्वत्त्रिषु लोकेषु पाण्डव ॥ पूजादिविधाय ॥ अद्यत्रैलोक्याधिकरणकत्वबलौजसोयशःकीर्त्तिशश्वद्वृद्धिकामइदमन्नंप्रजापतिदै

वतमित्यादि॥ दक्षिणास्पर्शान्तं॥ आग्नेयपु
राणीयान्नदाने॥ तस्मादन्नं सदा देहि अस्म
यानृपसत्तम। ब्रह्महत्याकृतपापमन्नदस्यप्र
णश्यति॥ पूजादिविधाय॥ अद्य ब्रह्महाकृतपाप
नाशकाम इदमन्नं प्रजापति दैवतमित्यादि॥
स्कान्दपुराणीयसुसंस्कृतान्नदाने॥ अन्नं यस्तु सु
संस्कृत्य प्रदद्यात् द्विजातये॥ सर्व्वकामानवाप्नोति
पूज्यते च त्रिविष्टपे॥ पूजादिविधाय॥ अद्य स
र्व्वपापक्षयपूर्व्वक सर्व्वकामावाप्तित्रिविष्टपपूज्य
त्वकाम इदमन्नं सुसंस्कृतं प्रजापति दैवतमि
त्यादि॥ दक्षिणास्पर्शान्तं॥ अन्नदाने मयूर
हंससंयुक्तं सर्व्वकामसमृद्धिमत्॥ विमानं सूर्य्य
संकाशमन्नदो लभते शुभम्॥ यदि मानुषतां या
ति कदाचिन्नरसत्तम॥ धनधान्यसमाकीर्णे
कुले जायेत रूपवान्॥ यथाशक्त्यातु तद्याद्दिवसे
दिवसे नरः॥ स तेन कर्म्मणाप्नोति प्रजापति
सलोकताम्॥ दिवसे दिवसे दद्याद्विधिना तेन

कर्म्मणा। प्रतिदिनमन्नमसौ ददानीत्यर्थ ॥ पूजादिविधाय॥ अद्यमद्गृहस्थयुक्त सर्व्वकाम समृद्धिमत् सूर्य्यप्रकाशशुभविमानलाभोत्तरध नधानाद्यक्षयलोकानुकल्पजन्मत्व तदुत्तरयथा शक्ति प्रतिदिनान्नजनक प्रजापति फले।काव्य प्राप्तिकाम इदमन्न प्रजापति दैवतमित्या दि॥ दक्षिणास्वर्णान्तं॥ शिवपुराणोदसुस स्कृतान्नदाने॥ अन्नं यस्तु प्रयच्छेतसमृतन्ब्राह्म णायवै॥ राज्यस्थानमवाप्नोति विजुश्चाभि जायते॥ सुसमृत सुसस्कृत पूजादिविधाय॥ अद्यविजुरकर्तृकराज्यस्थानप्राप्तिकामइदसुस स्कृतान्नं प्रजापतिदैवतमित्यादि॥ दक्षिणास्व र्णान्त॥ महाभारतीयसुसस्कृतान्नदाने॥ यथाशक्तिचयोदद्यादन्न विप्रे सुसस्कृतं॥ सतेन कर्म्मणाप्नोति प्रजापतिसलोकताम्॥ पूजादि विधाय॥ अद्यप्रजापतिसलोक्यप्राप्तिकामइद समस्कृतान्न प्रजापतिदैवतमित्यादि। दक्षि

णासर्पर्णान्तं ॥ आग्नेयेसुसंस्कृतान्नदाने ॥ सुसंस्कृतञ्चयोदद्यादन्नं श्रद्धासमन्विता। इन्द्र लोकेवसत्सोपि यावदिन्द्राश्चतुर्द्दश ॥ पुजादि विधाय। अद्यचतुर्द्दशेन्द्रियलोकसमयावच्छिन्न इन्द्रलोकवासकामइदंसुसंस्कृतान्नं प्रजापति दैवतमित्यादि ॥ दक्षिणासर्पर्णान्तं ॥ आग्ने येऽन्नदाने ॥ अन्नदानात्परंदानं न भूतं न भविष्यति। पुत्रा यशस्यमायुष्यं बलपुष्टिविव र्द्धनम् ॥ सर्व्वञ्चान्नप्रदानेन भवतीतिविनि श्चय। महाकाञ्चनचित्राणि सेवितान्यप्सरो गणै ॥ अन्नदस्योपतिष्ठन्ति विमानानिवरा लये। भक्ष्यभोज्यमया शैला दिव्यरूपाह्यल कृता ॥ हृष्टपुष्टजनानित्यमुपतिष्ठन्तिचाग्र त। हस्त्यश्वरथयानैश्चक्रीडमानाश्चतेनरा ॥ पुत्रपौत्रैर्वृता सर्व्वे हस्त्यश्वरथयानका। गन्ध माल्यैरलकारै स्तुष्टाहृष्टाश्चनित्यश । ग- न्धर्व्वैर्दिव्यगीतस्तु द्रानन्निग्धयतत्परा ॥ ध

मेधा सत्यशीलाश्च सर्वदुष्टविवर्जिता ॥
मोदन्ते दैवतैः सार्द्धं नित्यकालं महात्मने ॥
पूजादि विधाय ॥ अद्य पुण्यायुर्यशोबलपुष्टिवि
वृद्धिस्वर्गलोकाधिकरणक महाकाञ्चनविचित्र
वहुप्सरोगणसंसेवित बहुविमानोपस्थिति भक्ष्य
भोज्यमयबहुशैलोपस्थिति दिव्यरूपावृतहृष्ट
पुष्टबहुजनकर्तृक नित्यस्वागोपस्थान बहुहृ
स्त्यश्वरथमहाकाञ्चन विचित्रबहुप्सरोगणसे
वितबहुविमानोपस्थिति यानकरण कारण
नानाम्रिबहुपुष्पौघपरिहृतत्व हस्त्यश्वयानक
रणक बहुगन्धमाल्यबहुलंकारकरणानित्य
तुष्टत्वबहुगन्धर्वोपगीयमानत्वदाननिश्चयकृत
त्वरत्वधर्म्मत्वसत्यशीलत्वसर्वदुष्टविवर्ज्जित
त्वनित्यकालिकबहुदैवत सहमोदनकामहृद
मन्न प्रजापतिदैवतमित्यादि ॥ दक्षिणास्वर्णान्त
पात्रेऽन्नदाने ॥ क्षुधिते यः प्रयच्छेत अन्नं श्र
द्धासमन्वितं । ब्राह्मणेभुवने सर्वे ब्रह्मणासह

मोदते॥ पूजादिविधाय॥ अद्यभुवनाधिकरण
कब्रह्मसद्मभोदनकाम इदमन्नं प्रजापतिदैवत
मित्यादि॥ दक्षिणास्पर्शान्त॥ कौर्म्मे गृह
स्थायान्नदाने॥ गृहस्थायान्नदानेन फलंप्रा
प्नोतिमानव। आममेवास्यदातव्यं दत्वा
प्नोतिपरागतिम्॥ पूजादिविधाय॥ अद्यपर
मगतिप्राप्तिकामइदमन्नंप्रजापति दैवतमित्या
दि॥ दक्षिणास्पर्शान्तं॥ विष्णुधर्मे सुसंस्कृता
न्नदाने॥ यावतोग्रसतेग्रासान् विद्वानविप्र
सुसंस्कृतान्॥ अन्नप्रदस्यतावन्त क्रीडितः प
रिकीर्त्तिता॥ पूजादिविधाय॥ अद्यदातव्यग्रा
सग्राससम संख्यक्रतुजन्य फलसमफलप्राप्ति
कामइदमन्न सुसंस्कृतप्रजापतिदैवतमित्यादि
दक्षिणास्पर्शान्तं॥ स्कान्दे अन्नदाने॥ कदा
चिदपियोदद्यादन्नविप्रायसत्कृतम्। तस्यापि
तत्कृतगुणसहस्रगुणमेवच॥ उपतिष्ठतिलोके
प इहापिचसुखीभवेत्॥ पूजादिविधाय॥

अथान्नदानप्राप्यलोकाधिकरकामुष्मिक शतस
हस्रगुणदातवा जातोधान्नोपस्थित्यैहिकसुखि
त्वभवनकाम इदमन्नप्रजापतिदैवतमित्यादि।
दक्षिणास्पर्शान्त ॥ सतकृतं सत्कारं। सुस
स्कृतान्नदाने ॥ अन्नयेतुप्रयच्छन्ति ब्राह्मणेभ्य
सुसस्कृतं ॥ श्रोत्रियेभ्योविशेषेण भक्त्यापरम
यायुताः॥ तरुणीभि वरस्त्रीभि. याच्यमाना.
प्रयत्नत. ॥ धर्म्मराजपुरयान्ति विमानैरत्यलं
कृतै ॥ पूजादिविधाय॥ अद्यसप्रयत्नवरस्त्री
सेव्यमानात्मकर्तकालकृत वहु विमान करण
धर्म्मराजपुरगमनइद सुसस्कृतान्नंप्रजापतिदै
वतमित्यादि॥ दक्षिणास्पर्शान्त ॥ भक्ष्यदा
ने॥ संभोजयेद्योभक्ष्यै ब्राह्मणंवेदपारगं॥
तस्य.मृतप्रवाहिन्यो नद्यास्तिष्ठन्तिसर्व्वस.॥ पू
जादिविधाय॥ अद्यसर्व्वसोमृतप्रवाहिनद्युप
स्थितिकाम ईदंभक्ष्यंविष्णुदैवतमित्यादि॥
दक्षिणास्पर्शान्त॥ शक्तुदाने॥ सक्तुदस्तृप्तिरू

प्रीतिपूजादिविधाय अग्निष्टोमप्राप्तिकाम एतान् सक्तून् प्रजापतिदैवतानित्यादि॥ द्विशतभोज्य दाने॥ यस्य चान्नमुपाश्नाति ब्राह्मणानां शतद्वयम्॥ प्रहृष्टमनसा दत्तं न स तिर्य्यग्गतिर्भवेत्॥ पूजादिविधाय॥ अद्य तिर्य्यगनुत्पत्तिकाम एतानि द्विशतभोज्यानि सोपकरणानि प्रजापतिदैवतानीत्यादि। दक्षिणास्पर्शान्त॥ महाभारतीयसहस्रभोज्यदाने॥ भोजयित्वा दशशतं नरो वेदविदां नृप। न्यायवद्विदुषाञ्चैव श्रुतिभाष्यविदां तथा॥ न याति नरकं घोरं संसारांश्च न सेवति। सर्वकामसमायुक्तः प्रेत्य चाप्यश्नुते सुखं॥ पूजादिविधाय॥ अद्य घोरनरकानुपसर्पण संसारासेवन सर्व्वकाम समायुक्तत्वपूर्वक परलोकसुखप्राप्तिकाम एतानि सहस्रभोज्यानि प्रजापतिदैवतानीत्यादि॥ दक्षिणास्पर्शान्तं महाभारतीयलक्षभोज्यदाने॥ ब्राह्मणानां सहस्राणि शतं भोज्य नरर्षभ॥ नरो धर्मात् समुच्येत

पापेभ्य।भरत सदा॥ पूजादिविधाय॥ अद्यान्नप्रभृति सर्व्वकालकृतसकलपापक्षयकामोक्ष पुरुषभोज्यानादीनि प्रजापतिदैवतानीतयादि॥ दक्षिणास्पर्शान्तं॥ महाभारतीयदधिदाने॥ चित्रगुप्तवाक्यं॥ दधिक्षीरघृतञ्चैवयेनदत्तं द्विजातिषु। एकवायात्तु मत्पार्श्वमस्मिन्पूजाप्रयत्नतः॥ नीयतानीयताशीघ्रं दातुतिष्ठतुचालये॥ गोरसस्यतुपूर्णानिभाजनानिसहस्रशः॥तत्रदत्वाचपीत्वाच बान्धवेभ्योविशेषतः॥ ततः पश्चादमुं यातु यत्रलोकोनमूढकः॥ तत्रैवरमतः धीरो बहुवर्षशतान्ययम्। बहुसुन्दरनारी[illegible]व्यमानोमहात्मना॥ अमराख्योभवे[illegible] गोलोकेपुमहामति॥ पूर्ववत्पूजादिकविधाय। अद्यचित्रगुप्तगमनकामतद्देशवर्त्तिपुरुषपूज्यत्वगोरसपूर्णभाजनसहस्रबान्धवसंप्रदानकदानपानतदुत्तरबहुवर्षशताच्छिन्नबहुसुन्दरनारी सेव्यमानात्मरमणम।

ह्यातप संपत्यस्तु यामुन्यगोलोकाधि करणाम
राख्यत्वकाम इदंदधिविष्णु दैवतमित्यादि ॥
दक्षिणादधिसम्प्रशान्तं ॥ नन्दिपुराणेषसुस
स्कृतदधिदाने ॥ येचक्षीरं प्रयच्छन्ति घृतमधु
गुड दधि। ब्राह्मणेभ्य प्रयत्नेन शुद्धेयस्तुसुस
स्कृत ॥ चक्रवाकप्रयुक्तैस्तुविमानैश्चहिरण्मयै
यान्तिगन्धर्ववादित्रैसेव्यमानायमालयम् ॥
पूजादिकपूर्व्वबह्निधाय ॥ अद्यगन्धर्व्ववादित्र
सेव्यमानत्व तत्समानकालिक चक्रवाकसञ्चा
रितहिरण्मय बहुविमानकरणक वैवस्वता
लयगमनकाम्इद दधिसुसंस्कृत विष्णुदैव
तमित्यादि दक्षिणा दधिसम्प्रशान्त ॥ वि
ष्णुधर्मोत्तरीयदधिदाने ॥ तथामधुप्रदा
नेन मगत्यानामुतेसदा। पूजादिविधाय ॥
अद्येत्यादिक मगत्यावाप्ति कामइद दधि
विष्णुदैवतमित्यादि ॥ दधिदक्षिणाञ्चपूर्व्ववदि
तिसर्व्वत्रयोज्यं दधिसम्प्रदानमिताऽपि सर्व्व

च ॥ अथ क्षीरदाने ॥ पूजादिविधाय ॥ अद्यचित्रगुप्तपार्श्वगमनतद्देशपुरुषपूज्यत्वगौरवपूर्णभाजनसहस्रवान्धवसम्प्रदानकदानपानतदुत्तरबहुवर्षशतावच्छिन्नबहुसुन्दरनारीसेव्यमानात्मरमणमहातपसपत्यसह्याशून्यगोलोकाधिकरणकामद्दद क्षीरं विष्णुदैवतमित्यादि ॥ दक्षिणास्पर्शान्तं ॥ मूलवाक्यं दधिप्रकरणे लिखितमेव ॥ विष्णुधर्मे क्षीरदाने ॥ क्षीरदस्तृप्तिमाप्नोति सर्वदुःखैर्विमुच्यते। पूजादिविधाय ॥ अद्यतृप्तिप्राप्तिसर्वदुःखविमुक्तिकामद्दद क्षीरं विष्णुदैवतमित्यादि ॥ दक्षिणास्पर्शान्तं ॥ नन्दिपुराणीसुसंस्कृतदुग्धदाने ॥ पूजादिविधाय ॥ अद्यगन्धर्ववादित्रसव्यमानत्वसमानकालिकचक्रवाकसञ्चारितहिरण्मयबहुविमानकरणकवैवस्वतालयगमनकामद्दद सुसंस्कृतं दुग्धं विष्णुदैवतमित्यादि। दक्षिणास्पर्शान्तं ॥ विष्णुधर्मे घृतदाने ॥ द

वर्णस्यप्रदातारः तिलानांसर्पिषस्तथा ॥ ते जस्विनोभिजायन्ते भोगिनश्चिरजीविनः ॥ पूजादिविधाय ॥ अद्यतेजस्वित्ववहुभोगित्वचिरजीवित्वभवनकाम इदंघृतंविष्णुदैवतमित्यादि ॥ दक्षिणास्पर्शान्तं ॥ वन्हिपुराणीयस्य स्नातघृतदाने । पूजादिविधाय ॥ अद्यगन्धर्वादिसंसेव्यमानत्व समकालिकसंचारितहिरण्मय वहुविमानकरणक वैवस्वतालयगमनकाम इदंघृतविष्णुदैवतमित्यादि ॥ दक्षिणा स्पर्शान्तं ॥ वराहे घृतदाने ॥ पूजादिविधाय अद्यचित्रगुप्तपार्श्वगमनतद्दे शिवर्त्ति पुरुषपूजात्वगौरसपूर्णसहस्रभाजनवान्ध्ववसंप्रदानकदानपानतदुत्तर अतिवर्षशतावच्छिन्नवहुसुन्दरनारीसेव्यमानत्वमक्षातपापस्य पत्यसूयाशून्य गोलोकाधिकरणामराख्यत्वकाम इदंघृत विष्णु दैवतमित्यादि॥ दक्षिणास्पर्शान्तं ॥ अथैक्षवदानं ॥ तत्रसमूर्त्तेक्षुरसदाने ॥ गुडमि

नु रसञ्चैव लवणव्यञ्जनानिच ॥ सुरभीणि
चपानानि दत्वात्यन्त सुखीभवेत् ॥ पूजा
दिविधाय ॥ अद्यातत्तत्सुखित्वभवनकाम
इमामिक्षुरसं सोमदैवतमित्यादि ॥ दक्षि
णाद्यपर्शान्त ॥ गुडदाने प्येतदेव फलं ॥
नन्दिपुराणीयगुडदाने ॥ पूजादिविधाय ॥
अद्यगन्धर्वादिच सेव्यमानतुसमानकालि
कचक्रवाकसञ्चारितहिरण्मयबहुविमानकालि
कचक्रवाकसञ्चारित हिरण्मयबहुविमानक
रणकयमालय गमनकामइमगुडं सुसंस्कृत
सोमदैवतमित्यादि ॥ दक्षिणाद्यपर्शान्त ॥
विष्णुधर्म्मखण्डदाने ॥ खण्डप्रदश्चसौभाग्य
पूजादिविधाय ॥ अद्य सौभाग्यावाप्तिका
मोमु खण्ड सोमदैवतमित्यादि ॥ दक्षिणा
द्यपर्शान्त ॥ शर्कारादाने ॥ सितादश्चत
थातपः ॥ सिताशर्करा पूजादिविधाय ॥ अद्य
तप प्राप्तिकाम इमा शर्करा सोमदैवताक्ति

त्यादि॥ दक्षिणास्पर्शान्तं॥ विष्णूक्तमधुदाने मधुघृततैलदानेनारोग्यं। पूजादिविधाय। अद्य आरोग्यप्राप्तिकाम इदं मधु विष्णुदैवतमित्यादि। दक्षिणास्पर्शान्त। नन्दिपुराणीयस्वसङ्कृतमधुदाने॥ पूजादिविधाय॥ अद्यगन्धर्ववादित्र सेव्यमानतत्समानकालिक चक्रवाकसंचारित किङ्किणीमय बहुविमानकरणक यमालयगमनकाम इदं स्वसंस्कृत मधु विष्णुदैवतमित्यादि॥ दक्षिणास्पर्शान्तं॥ मूलवाक्ये दधिदाने लिखितं॥ विष्णुधर्मोत्तरीयमधुदाने॥ सर्वान् कामान् मधुप्रद॥ पूजादिविधाय॥ अद्यसर्वकामावाप्तिकाम इदं मधु विष्णुदैवतमित्यादि दक्षिणास्पर्शान्तं॥ अथसद्युक्तपानकदाने दत्वात्यन्त सुखीभवेत्॥ पूजादिविधाय॥ अद्यातान्तसुखितत्वभवनकाम एतानि सुरभिपानकानि विष्णुदैवतानीत्यादि॥ दक्षिणास्पर्शान्तं विष्णुधर्मोत्तरीयपानकदाने॥ वारुणंलोक

माप्नोति तथापानप्रदानेन ॥ पूजादिविधाय ।
अद्यवारुणल्लोकप्राप्तिकाम इदपानकंविष्णु दै
वतमित्यादि ॥ दक्षिणान्तस्पर्शान्त ॥ सुगन्धिद्रव्य
युतशीतलपानकानादाने ॥ पानकानिसुगन्धी
निशीतलानिमयकृत सर्वकामसमृद्धि स्यान्ना
न्नकायां विचार्य्याप्ताप्तजादिविधाय ॥ अद्य सर्व्व
कामसमृद्धिमत्काम एतानिसुगन्धीनिशीतल
पानकानि विष्णुदैवतानीत्यादि ॥ दक्षिणा
स्पर्शान्तं ॥ पानकलक्षण वैद्यकशास्त्रे ॥ गौ
डमस्त्लमलस्त्लाम्बापानक सुरभीकृत ॥ तदेवमृदु
खण्डीकाशर्क्करासहितपुन ॥ मास्कृ सुतीक्ष्
णसुहितं पानकंस्यान्द्रितरम् ॥ पुरुषकाणां
कौलाना हृद्यदिष्टंडि पानकम् ॥ कौलान
वदराणां ॥ विष्णुधर्मोत्तरीयलेह्यदाने ॥
लेह्यदाप्सरसालोकं प्राप्नोतीतिशेष । लेह्य
पिण्डीकृतदुग्धानि ॥ वसूनामपिचोष्यद ॥
चोष्यमाषादि ॥ पूजादिविधाय ॥ अद्यवसुलो

कादाप्तिकामइदवौष्य विष्णु दैवतमितग्रादि ॥ दक्षिणास्पर्शान्त ॥ अथतैलदानम् ॥ तैल घृत दानेनारोग्य माप्नोतीतिश्रेष ॥ पूजादि विधाय॥ अद्यारोग्यप्राप्तिकामइदंतैलंविष्णु दैवतमित्यादि ॥ दक्षिणास्पर्शान्तं ॥ सम्पूर्णा तैलदाने ॥ तैलमामलकगन्ध पादाभ्यं गतश्चैवच । नर सद्यस्तेजस्वी सुरूपश्चैव जायते ॥ पूजादिविधाय ॥ अद्यसद्यस्त्वतेजस्वित्वभवनकाम इदंतैलंविष्णुदैवतमित्यादि दक्षिणास्पर्शान्तं ॥ पादाभ्यगतैलदानेप्ये तदेवफल ॥ यमोक्ताभ्यंगतैलदाने ॥ गन्धै षधमथाभ्यंगमाक्षिकलवणन्तथा । दत्वा प्रय क्तिविधाय सौभाग्यंसमुदिन्दति ॥ पूजादि विधाय ॥ अद्यसौभाग्यप्राप्तिकामोसुमभ्यंग दिष्णुदैवतमित्यादि ॥ दक्षिणास्पर्शान्त ॥ अभ्यंगोऽभ्यंजनद्रव्यं तैलादि ॥ अथलवण दानं ॥ तत्रविष्णुधर्मे ॥ लवणस्यप्रदातार

स्तिलानासर्प्पिषान्तथा । तेजस्विनोभिजाय न्ते भोगिनश्चिरजीविन ॥ पूजादिविधाय अद्यतेजस्वित्वभोगित्वचिरजीवित्व भवनकाम इदंलवणंविष्णुदैवतमित्यादि॥दक्षिणास्पर्शा न्त ॥ समुत्तौ लवणदाने ॥ दत्वात्यन्तसु खीभवेत् ॥ पूजादिविधाय ॥ अद्यात्यन्तसुखि त्वभवनकामइदंलवणंविष्णुदैवतमित्यादि ॥ दक्षिणास्पर्शान्तं ॥ विष्णुधर्मोत्तरीयलवण दाने ॥ सर्व्वान् कामान् वाप्नोति लवणंय प्र यच्छति ॥ पूजादिविधाय ॥ अद्यसर्वकामावाप्ति कामइदंलवणसोमदैवतमित्यादि ॥ दक्षिणा स्पर्शान्त ॥ महाभारतीयलवणादिरसदा ने ॥ भक्ष्यान्नपानीयरसप्रदाता सर्वानवाप्नोति रसान्सकामी ॥ अकामी अनिच्छुरपीत्यर्थ ॥ पूजादिविधाय॥अद्यसर्व्वकामानवाप्तिकामइ ममुकरसंविष्णुदैवतमित्यादि । दक्षिणास्प र्शान्तं ॥ अथगन्धदानम् ॥ तत्रपद्मपुराणे ॥

गन्धाभरणमाल्यानि यः प्रयच्छेतधर्मवित्। स सुगन्धः सदाहृष्टो यत्रतत्रोपजायते॥ पूजादि विधाय॥ अद्येत्यादि सार्व्वभौमिकसुगन्धत्वसदाहृष्टत्व कामइमं सुगन्धगन्धं वेदेदत्तमित्यादि॥ दक्षिणा स्पर्शान्तं॥ ब्रह्मपुराणीयसुगन्धदाने॥ सुगन्धागुरुकर्पूरं पुष्पधूपान्द्विजोत्तमाः। प्रयच्छन्तिद्विजातिभ्यो भक्त्यापरमयान्विताः॥ ते सुगन्धाः सुरसाश्च सुप्रभा ग्यग्विभूषिताः। यान्तिधर्मपुरंयानै र्विचित्रैरभालङ्कृता॥ पूजादिविधाय॥ अद्यगन्धवं सुरेश सुप्रभस्रग्वि भूषिताभ्रलङ्कृतात्मकर्त्तृकविचित्रवहुयानकरणकधर्मपुरगमनकामइदंगन्धं सम्प्रददे तमि त्यादि॥ दक्षिणा सुगन्धस्पर्शान्तं॥ सुगंधं एकीकृतानेकसुरभिद्रव्यरूपमितिदानसागर। चतुरदाने॥ पूजादिविधाय॥ अद्यसुगंधसुरे शसुप्रभस्रग्विभूषिताभ्रलंकृतात्मकर्त्तृकविचि त्रवहुयानकरणकधर्मपुरगमनकामइदमगुरुं

गन्धर्वदैवतमित्यादि॥ दक्षिणास्पर्शान्तं॥ विष्णुधर्मोत्तरीयागुरुदाने॥ तथैवागुरुदानेन। यशसात्तु विराजते। पूजादिविधाय॥ अद्यय शोविराजमानत्वकाम इदमगुरु गन्धर्वदैवतमित्यादि॥ दक्षिणास्पर्शान्तं॥ कर्पूरदाने। तथाकर्पूरदानेन सर्वकामानवाप्नुयात्। पूजादिविधाय॥ अद्यसर्व्वकामावाप्तिकाम इदं कर्पूरंगन्धर्वदैवतमित्यादि॥ दक्षिणास्पर्शान्तं॥ ब्रह्मपुराणीयकर्पूरदाने। पूजादिविधाय॥ अद्यसुगंधसुरेशसुवप्रभवसन्निभूषित।लंकृतात्मकर्त्तृकविविधच बहुदानकरणकधर्मपुरगमनकाम इदंकर्पूरंगंधर्वदैवतमित्यादि॥ दक्षिणास्पर्शान्त॥ मूलवाक्यंगंधदाने लिखितमेव। कुंकुमदाने। सौभाग्यकारकंप्रोक्तं प्रदानंकुंकुमस्यतु। पूजादिविधाय। अद्यसौभाग्यप्राप्तिकाम इदंकुंकुमंगंधर्वदैवतमित्यादि॥ दक्षिणास्पर्शान्तं॥ कस्तुरिकादाने॥

मृगदर्प्पप्रदानेन यशसानुविराजते। पूजादि
विधाय॥ अद्ययशोविराजमानत्वकामोमृग
मदंगंधर्वदैवतमित्यादि॥ दक्षिणास्पर्शान्त
मार्कण्डेयपुराणीयचन्दनदाने॥ प्रीतिंनय
न्ती धनदास्तापचन्दनदायिन॥ पूजादिवि
धाय॥ कृद्यतापजयकामइदंचन्दनगन्धर्वदै
वतमित्यादि॥ दक्षिणास्पर्शान्त॥ स्नानोचि
तसुगन्धिद्रव्यदाने॥ स्नानीयानिसुगंधीनि द
त्वासौभाग्यमश्नुते॥ पूजादिविधाय॥ अद्य
सौभाग्यप्राप्तिकाम एतानिस्नानीयानि सुगं
धीनिगंधर्वदैवतानीत्यादि॥ दक्षिणास्पर्शांत
चन्दनकुङ्कुमागुरुकर्पूरकस्तूरीजाफलाना
मन्यतमदाने॥ गंधमाल्यप्रदानेन तुष्टिर्भव
तिनिश्चला॥ पूजादिविधाय॥ अद्यनिश्चलतु
ष्टिप्राप्तिकाम इदंचन्दनंगंधर्वदैवतमित्यादि।
दक्षिणास्पर्शान्तं। कुङ्कुमादिगंधदानेपीद
मेवफलं। अथानुलेपनदाने। तत्रमहाभार

ते ॥ स्रग्धूपगंधानुलेपनानि रम्याणि माल्या
नि च मानवीय ॥ दद्याद्विजेभ्य स भवेदरोग
स्तथाति रूपश्च नरेन्द्र लोके ॥ देयबहुत्वापे
क्षया बहुवचन ॥ पूजादिविधाय । अद्यनरे
न्द्रलोकाधिकरणकारोगत्वातिरूपकत्व भवन
काम इदमनुलेपन गंधर्वदैवतमित्यादि दक्षि
णास्पर्शान्त ॥ विष्णुक्तानुलेपनदाने ॥
अनुलेपनदानेन कीर्तिमान् भवति द्विज ॥
पूजादिविधाय । अद्यकीर्त्तिमत्वभवनकाम
इदमनुलेपनगंधर्वदैवतमित्यादि । दक्षिणा
स्पर्शान्तं ॥ अथधूपदान । तत्रयम उर्द्धांग
तिमवाप्नोति यश्चधूपप्रदोनर ॥ पूजादिविधा
य ॥ अद्य गंधर्वगतिप्राप्ति कामोमु धूपगंधर्वदै
वतमित्यादि ॥ दक्षिणास्पर्शान्तं ॥ धूपदानं
धूपोपयुक्तद्रव्याणि॥नन्दिपुराणेधूपदाने ॥
धूपद सुरभिर्नित्यं पुष्पद सुरभि सदा । त
रते मानवोधन्यो दशजन्मान्यसंशयं ॥ पूजा

दिविधाय ॥ अद्य नित्यसुरभिधन्यात्मकहेक
दशजन्मतरणकामोमु रूपगंधर्वदैवतमित्या
दि ॥ दक्षिणास्पर्शांतं ॥ मूलवाक्य गन्धदाने
लिखित ॥ अथदीपदानं ॥ तत्रमनुः । दीपद
श्चक्षुरुत्तम् ॥ प्राप्नोतीतिशेष ॥ पूजादिविधा
य ॥ अद्योत्तमचक्षुःप्राप्तिकामोमु दीपंविष्णु
दैवतमित्यादि ॥ दक्षिणास्पर्शान्तं ॥ दीपश्च
घृतेन तैलेनवादातव्य ॥ तथाच महाभारते
हविषाप्रथम कल्पोद्वितीयश्चौषधीरसै ।
वसामेदोस्थिनिर्यासै र्नकार्यं पुष्टिमिच्छता ॥
वर्त्तिश्चमलिनोभुक्त वस्त्रादिनानकर्त्तव्या ।
शाणवादरवस्त्रं जीर्णमलिनमेववा ॥उपभु
क्तस्तुनादद्याद्वर्त्तिकार्थं कदाचनेतिनिषेधात्
याज्ञवल्कीयदीपदाने ॥ दत्वास्वर्गेमहीयते ॥
पूजादिविधाय ॥ अद्यस्वर्गलोकमहितत्वका
मोमदीपं विष्णुदैवतमित्यादि ॥ दक्षिणा
स्पर्शान्तं ॥ महाभारतीयदीपदाने ॥ प्रदीप

ख्यपदानेन श्रूयतागुणविस्तर। तमोऽन्धका
रं नियतं दीपदो नप्रणश्यति॥ प्रभाञ्चास्यप्रय
च्छन्ति सोमभास्करपावक। देवताश्चानुमन्य
न्ते विमला सर्वतोदिश॥ द्योतते च यथादि
त्य प्रेतलोकगतोनर। तस्माद्दीप प्रदात
व्य प नीयश्च विशेषत॥ पूजादिविधाय॥
अद्यानियततमोऽन्धकारादर्शनसोमभास्करद
त्तप्रभालाभ बहुदेवताकर्तृक सर्वतोदिक्कानुम
तिप्रेतलोकाधिकरणकादित्यवद्द्योतनकामो
मुदीपविष्णुदैवतमित्यादि॥ दक्षिणास्यशो-
क्त। नन्दिपुराणीयदीपदाने। दीपददाति
योमर्त्य सुरब्राह्मणवेश्मनाम्। सदिव्येनतु
यानेन महाभाभप्रभाविना॥ गच्छते स्वर्गकतु
ल वसेत्तत्र समा शतम्॥ पूजादिविधाय॥ अ
द्यमहाभाभप्रभाविदिव्ययान करणकातुल्य
स्वर्गगमनतदधिकरणकवर्षशतावच्छिन्नवसतिकामः
कामएताम् दीपाम् विष्णुदैवतामित्यादि॥

नदीपुलिनवृक्षादिमूलेषु दीपदान॥ गिरिशृ
ङ्गप्रदातव्या नदीनापुलिनेषुच। वृक्षमूलेषु
गोष्ठेषु कान्तारगहनेषु च॥ दीपदानेनसर्व
च महत्फलमुपाश्नुते। यावत्यक्षिनिमेषा
णि दीप प्रज्वलतेनृप॥ तावन्त्येवसराजेन्द्र
वर्षाणिदिविमोदते। दीवदानं नराजेन्द्र च
क्षुष्मानिहजायते। रूपसौभाग्ययुक्तश्च धन
धान्यसमन्वित॥ पूजादिविधाय। अद्यकृत
फलप्राप्तियावदक्षिनिमेषावछिन्न दीपज्वलन
समसंख्यवर्षावछिन्नस्वर्गाधिकरणमोदनैहिक
चक्षुष्मत्वरूपसौभाग्ययुक्त धनधान्य समन्वित
त्व प्रजनकाम एतान् दीपान् विष्णुदैवता
न्नदीपुलिनेष्वहंददे। एववृक्षमूलादिष्वपिवा
क्यमूहनीयम्॥ अथताम्बूलदानं।
तत्रस्मृत॥ ताम्बूलञ्चैवयोदद्याद् ब्राह्मणे
भ्योविचक्षणा। मेधावीसुभग.प्राज्ञो दर्श
नीयश्चजायते॥ पूजादिविधाय॥ अद्यमेधा

वित्वसुभगत्वप्रार्थत्वदर्शनीयत्वकामइदं ताम्बु लंगन्धर्वदैवतमित्यादि ॥ दक्षिणान्तं स्पर्शान्त ॥ विष्णुधर्मोत्तरोदितताम्बूलदाने ॥ दत्वापूग फलविप्रा सफलानिन्दतेक्रियाम् । ताम्बूल स्यप्रदानेन सौभाग्यमपिविन्दति ॥ पूजादि विधाय ॥ अद्यक्रियासाफल्यसौभाग्यप्राप्तिका मइदंताम्बूलगन्धर्वदैवतमित्यादि ॥ दक्षिणा स्पर्शान्त ॥ स्नानोपयुक्त तिलानामलकादिदा ने ॥ स्नानानांसुखवासानां धूपानाञ्चप्रदा- यका । लोकेभयान्तिप्रियता प्रभवन्तिसुग न्धिन ॥ स्नानोपयुक्तसुगन्धिद्रव्याणा पूजा दिविधाय॥ अद्यलोकप्रियत्वभवनकामएतानि स्नानोपयुक्तसुगन्धिद्रव्याणिविष्णुदैवतानीत्या दि ॥ महाभारते स्नानोचितसुगंधिद्रव्यदान सम्बधूपगंधाननुलेपनानि स्नानानिमाल्यानिच मानवोय । दद्यात्द्विजेभ्य सभवेदरोग स्तथा तिरूपश्चनरेन्द्रलोके ॥ पूजादिविधाय ॥ अद्या

योग्यत्वनरेन्द्रलोकाधिकरणकाधिपत्व भवन
कामएतानि म्नानीपयुक्तसुगंधिद्रव्याणिविष्णु
देवतानीत्यादि ॥ दक्षिणास्पर्शान्त ॥ मूल
वाक्य तैलदाने लिखित । वहुव्यञ्जनदाने ॥
व्यञ्जनान्युपष्कृस्य दत्वात्यन्तसुखीभवेत् ॥
पूजादिविधाय ॥ अद्यात्यन्तसुखित्वभवनकाम
एतानिव्यंजनानिविष्णुदैवतानीत्यादि ॥ द
क्षिणास्पर्शान्तं ॥ शाकदाने ॥ पूजादिविधा
य ॥ अद्यसर्वादिकहर्षान्वितत्वभवनकाम एता
निशाकानिविष्णुदैवतानीत्यादि ॥ दक्षिणा
स्पर्शान्तं ॥ अथफलदान ॥ तत्रसम्वर्त्त ॥
फलमूलानिपानानि शाकानिविविधानिच ।
यानानिदत्वाविप्रेभ्यो मुष्टयुक्त सदाभ
वेत ॥ मूलानिकसेरुकानि ॥ पूजादिविधाय
अद्यसार्व्वदिक हर्षान्वितत्व भवनकामएतानि
फलानिवनस्पतिदैवतानीत्यादि ॥ स्कान्देवहु
फलदाने ॥ फलानिय प्रयच्छेत ब्राह्मणेभ्य-

समाहित । फलानामतुभागीस्यात् गृहेषु भगवद्य ॥ पूजादिविधाय ॥ अद्यबहुफलभागित्वसुभगत्वभवनकाम एतानि फलानि वनस्पतिदैवतानितग्रादि ॥ दक्षिणास्पर्शान्त ॥ ब्राह्मे बहुफलदाने ॥ येफलानिप्रयच्छन्ति पुष्पाणिसुरभीणिच । हंसयुक्तैर्विमानस्थैर्यान्ति धर्मपुरंनरा । पूजादिविधाय ॥ अद्य हंसयुक्तविमानकरणक धर्मपुरगमन काम एतानि फलानिवनस्पतिदैवतानीत्यादि॥ दक्षिणास्पर्शान्त वाराहे बहुफलदाने॥ फलैस्तु लभतेपुत्र ॥ पूजादिविधाय । अद्यपुत्रप्राप्तिकाम एतानि फलानि वनस्पतिदैवतानीत्यादि। दक्षिणास्पर्शान्तं॥ महाभारतीयफलदाने। लभतेचशुभस्थानं फलपुष्पप्रदायिन ॥ पूजादिविधाय ॥ अद्यशुभस्थानप्राप्तिकाम एतानि फलानिवनस्पतिदैवतानीत्यादि ॥ दक्षिणास्पर्शान्त ॥ पूगफलदाने ॥ दत्वापूगफलं विप्रा' सफलांविन्दतेक्रि

याम ॥ पूजादिविधाय ॥ अद्यकिदारफल्य
प्राप्तिकाम इदपूगफलवनस्पतिदैवतमित्यादि
दक्षिणारपशन्ति ॥ द्राक्षादाने ॥ इक्षुमृ-
द्वीकयोर्दान त दर सौभाग्यमाप्नुयात् ॥ मृ
द्वीकाद्राक्षा । पूजादिविधाय ॥ अद्यपरम
सौभाग्यप्राप्तिकाम एतानिद्राक्षाफलानि व
नस्पतिदैवतानीत्यादि ॥ दक्षिणारपशन्ति ॥
इक्षुदाने ॥ पूजादिविधाय ॥ अद्यामुकमास
कृष्णपक्षामुकतिथौसौभाग्यप्राप्तिकाम एता
निक्षुन विष्णुदैवतानित्यादि ॥ दक्षिणा
रपशन्ति ॥ कृष्णपक्षे बहुफलदाने ।
फलानाचतथादाने कृष्णपक्ष फलप्रद ।
पूजादिविधाय ॥ अद्यामुकमास कृष्ण
पक्षामुकतिथौ महाफलप्राप्तिकाम एतानि
फलानि वनस्पतिदैवतानीत्यादि ॥ दक्षिणा
रपशन्ति ॥ जातीफलदाने ॥ दत्वाजातीफल
विप्रा रूफलाविन्दतेक्रिया ॥ पूजादिविधा-

य ॥ अद्यक्रियासाफल्यप्राप्तिकाम इदन्ताती फलं गन्धर्वदैवतमित्यादि ॥ दक्षिणास्पर्शान्त ॥ मूलदाने ॥ मुदायुक्ता सदाभवेत् ॥ पूजादिविधाय ॥ अद्यसार्वदिक्हर्षसमन्वितत्वभवनकामएतानिमूलानि विष्णुदैवतानीत्यादि ॥ दक्षिणास्पर्शान्त ॥ अथपुष्पदाने ॥ तत्रविष्णु ॥ पुष्पदायीभवेच्छ्रीमान् ॥ पूजादिविधाय ॥ अद्यश्रीमत्वभवनकाम एतानि पुष्पाणिवनस्पतिदैवतानीत्यादि ॥ दक्षिणास्पर्शान्त ॥ याज्ञवल्कीयसुरभिदाने । येफलानिप्रयच्छन्ति पुष्पाणिसुरभीणिच ॥ हंसयुक्तविमानैस्ते यान्तिधर्मपुरं नरा । पूजादिविधाय ॥ अद्यहंसयुक्तविमानकरणकधर्मपुरगमनकामएतानिपुष्पाणीत्यादि ॥ दक्षिणास्पर्शान्त ॥ पुष्पदाने ॥ सुगन्धागुरुकर्पूर पुष्पधूपद्विजोत्तमा । प्रयच्छन्तिद्विजातिभ्यो भक्त्यापरमयान्विता ॥ तेसुगन्धा सुर

श्चाश्च सुप्रभा स्रग्विभूषिता ॥ यान्तिधर्मपुर
याने विचित्रै रप्यलंकृत ॥ पूजादिविधाय।
अद्यसुगन्धसुरेशल्वसुप्रभत्व स्रग्विभूषितालं
कृतात्मकर्तृक विचित्रबहुयानकारणकधर्मपुर
गमनकामइदंपुष्पवनरपतिदैवतमित्यादि ॥
दक्षिणासम्प्रदानं ॥ समुदितदानमितिकेचि
त् । वाराहपुष्पप्रदाने ॥ पुष्पैः सौभाग्यमेव
च ॥ पूजादिविधाय ॥ अद्यसौभाग्यप्राप्तिकाम
एतानि पुष्पाणि वनस्पतिदैवतानीत्यादि।
दक्षिणाम्पदानं ॥ महाभारतीयपुष्पपादपदा
ने विष्णुधर्मेपुष्पोपगम्यायफलोपगम्याय पाद
पसम्प्रयच्छतेद्विजान् हि। सस्त्रीसमृद्धं वहुरत्नपूर्णं
लभेदयत्नोपनतंगृहञ्च ॥ पूजादिविधाय। अद्य
सस्त्रीसमृद्धवहुरत्नपूर्णयत्नोपनतगृहलाभका
मोऽमुं पुष्पपादपं फलपादपंवावनस्पतिदैवत
मित्यादि ॥ दक्षिणासम्प्रदानं ॥ पुष्पपादप
श्चंपकादि ॥ फलपादपश्चाम्रादि ॥ आदि

तापुराणोदसफलपादपदाने ॥ पक्कान्ददाति केदारान् सफलांश्चैवपादपान् । षष्टिकोटि सहस्राणि अर्बुदानाचवैत्रय। कोडतितेस्व तपरे एतदुक्तं द्विजोत्तम ॥ पुजादिविधाय।
अद्यसर्वकामत्प्रात्मकर्तृकवरुणमन्दिरगमन कामफलान्वितात्मयुगपर्यंतवासकामोमुफल दृक्ष वनस्पति दैवतमित्यादि ॥ दक्षिणा स्पर्शोत ॥ विष्णु धर्मोत्तरीयाम् दृक्ष दाने ॥ आम्रवृक्षप्रदानेन सर्वान्कामा वा प्नुयात् ॥ पुजादिविधाय ॥ अद्यसर्वकामावा प्तिकामोमुमाम्रदृक्ष वनस्पतिदैवतमित्यादि । दक्षिणास्पर्शोत॥ नागरंगवृक्षदाने ॥ नारं गदानाद्भवति नरोरूपसमन्वित ॥ पुजादिवि धाय॥ अद्यरूपसमन्वितत्वभवनकामोमुनाग रंगवृक्ष वनस्पतिदैवतमित्यादि ॥ दक्षिणा स्पर्शोत ॥ बीजपूरदाने॥ बीजपूरप्रदानेन सौभाग्यंमहदाप्नुयात् । पुजादिविधाय ।

अयमहासौभाग्यप्राप्तिकामोमुं वीजपूरवृक्षं वनस्पतिदैवतमित्यादि ॥ दक्षिणास्पर्शान्तं । चम्पकादिवृक्षदाने ॥ चम्पकोमल्लिकाजाती श्रेष्ठापुष्पकराकृता । अन्येभ्योधिकमाप्नोति दत्वेतान्नात्रसंशय ॥ पूजादिविधाय ॥ अद्यान्यवहुवृक्षदानजन्यफलाधिकरणक फलप्राप्तिकामोमुं चम्पकवृक्षं वनस्पतिदैवतमित्यादि ॥ दक्षिणास्पर्शान्तं ॥ गुल्मदाने । गुल्मपुष्पप्रदयस्तु लतावासप्रयच्छति। विमानेनन्दनेसोय क्रीडत्यप्सरसागणै ॥ गुल्मोमतिमुक्तादि. । पूजादिविधाय ॥ अद्यनन्दनाधिकरणकविमानस्थबहुअप्सरोगणसेवितात्मक्रीडनकामोमुं गुल्मं वनस्पतिदैवतमित्यादि ॥ दक्षिणास्पर्शान्त । अथारामदाने ॥ तत्रनन्दिपुराणे ॥ क्रीडारामस्तुयोदद्यात उद्यानमुपसंस्कृतं । सकल्पतरुखण्डेषु महेन्द्रोद्यानवेश्मसु ॥ विलोक्यते अप्सरोवृन्दै वैसेच्चात्र न

सभ्रय। पूजादिविधाय॥ अद्यकल्पतरुखण्ड
महेन्द्रोद्यानवेश्माधिकरणक वह्लभरोगणावि
नोदतदधिकरणक यगावच्छिन्नवासकामइद
पुष्पसकुल क्रीडारा वनस्पतिदैवतमित्या
दि॥ दक्षिणास्पर्शान्त॥ क्रीडोचितवापीगृ
हादिसहितपुष्पितवकुलचंपकादिपादपसमूह
क्रीडाराम॥ तथाविधोद्यानदानेपीदमेव
फलम्॥ महाभारतीयोद्यानदानं॥ विहा
रावसथोद्यान कूपारामसभाप्रदा॥ प्रपाना
चैवकर्त्तार पुरुषा स्वर्गगामिन। पूजादिवि-
धाय॥ अद्यस्वर्गप्राप्तिकामइदमुद्यानंवनस्प
तिदैवतमित्यादि। दक्षिणास्पर्शान्तं। विष्णु
धर्मोत्तरीयोद्यानदाने॥आर मम थवोद्यान
नन्दनेक्रीडतेवने॥ पूजादिविधाय॥ अद्यन
न्दनवनक्रीडनकाम इदमुद्यानवनस्पतिदैवत
मित्याादि॥ दक्षिणास्पर्शान्तं॥ अथशय्यादान
तत्रशिवपुराणे॥ शय्याप्रदानंयकुर्य्यात् ब्राह्म

गाषु विशेषत । षष्टिवर्षसहस्राणि स्वर्गलो
के महीयते ॥ दद्यिकारूढ्ययंगत्वा जायतेवि
पुलेकुले । पूजादिविधाय ॥ अद्यषष्टिवर्षस
हस्रावच्छिन्नस्वर्गलोक महितत्वतदन्तरविपुल
कुलजन्मकामइमाशय्यामुत्तानं गिरीदैवता
अमुकगोत्रायेत्यादि ॥ दक्षिणास्पर्शांत ॥
ब्राह्मे शय्यादाने ॥ उपानद्युगलञ्च शय्या
सनमथापिवा ॥ येप्रयच्छन्तिवस्त्राणि तथैवा
भरणानिच ॥ तेयान्त्यश्वै रथैश्चैव कुंजरै
श्चाप्यलंकृता ।धर्मराजपुरस्य च्छत्रै सौव
र्णैराजतै । पूजादिविधाय ॥ अद्यसौवर्णि
राजतवहुछत्रालंकृतात्मीय वहुकुंजराश्विक
रणकरस्य धर्मराजपुरगमन कामइमाशय्या
मुत्तानं गिरीदैवता मित्यादि ॥ दक्षिणास्प
र्शांतं ॥स्कान्दे शय्यादाने ॥ यस्तुशय्याप्रयच्छेत
चास्तीर्णां नरसत्तम । सतुभार्यां प्रियादि-
व्या म्वर्ह्नीभर्त्ता समश्नुते । चास्तीर्णां स्टी

परिच्छिन्नतत्शोभनतूलकादिरूपा ॥ पूजादिविधाय ॥ अद्यप्रियदिव्यबहुभार्य्याप्राप्तिकाम इमा स्वास्तीर्णा शय्यां सोपकरणामुत्तानाङ्गिरोदैवतामित्यादि ॥ दक्षिणान्तं स्पर्शान्तं । याज्ञवल्क्यीयशय्यादाने ॥ दत्त्वात्यन्तं सुखी भवेत् ॥ पूजादिविधाय । अद्यात्यन्तसुखित्वभवनकाम इमां शय्यां सोपकरणामुत्तानाङ्गिरोदैवतामित्यादि ॥ दक्षिणान्तं स्पर्शान्तं ॥ विष्णुधर्मोत्तरीयशय्यादाने ॥ दत्त्वा द्विजाय शयनं स्वास्तीर्णं सोत्तरच्छदम् ॥ कुले महति सम्भूता रूपद्रविणसंयुता । तथा पक्षवती भार्य्या प्राप्नोति वशगा तथा । पक्षवती कुटुम्बिनी पूजादिविधाय ॥ अद्य महाकुलजन्म रूपद्रविणसंयुतपक्षवद्वशगभार्य्याप्राप्तिकाम इमां शय्यां स्वास्तीर्णां सोत्तरच्छदामुत्तानाङ्गिरोदैवतामित्यादि ॥ दक्षिणान्तं स्पर्शान्तं ॥ स्त्रीणां शय्यादाने ॥ पूजादिविधाय ॥ अद्य महाकुलसम्भूत रूपद्रविणपक्षवद्वशग

पतिं प्राप्तिकाम इमां शय्यां स्वास्तीर्णां सोत्तर
च्छदां उत्तानां गिरोदैवतामित्यादि ॥ दक्षि
णास्पर्शान्तं। महाभारतीयशय्यादाने ॥ सुग
न्धिचित्रास्तरणोपधानां दद्यान्नरोय शयनं
द्विजाय ॥ रूपान्वितां पक्षवतीं मनोज्ञां भार्यां
मयत्नोपचितां लभेत्स ॥ पुजादिविधाय॥ अद्य
रूपान्वितपक्षवन्मनोज्ञापत्योचितभार्याप्राप्ति
काम सुगन्धिविचित्राभरणोपधानं शयनं उत्ता
नाङ्गिरोदैवतमित्यादि ॥ दक्षिणास्पर्शान्त ॥
अथासनदानम् ॥ तत्रस्कान्दे ॥ आसनं च प्रय
च्छेत सपीठं ब्राह्मणाय वै। स राज्यस्थानमा
प्नोति स्वर्गमाप्नोति विज्वर ॥ राज्यस्थानं पृ
थ्वीं आसनं राजासन सपीठ सपादपीठ पूजा
दि विधाय॥ अद्य विज्वरात्मीयराजलाभस्वर्ग
प्राप्तिकाम इदमासन सपादपीठं प्रजापतिदै
वतमित्यादि॥ दक्षिणास्पर्शान्त ॥ आदित्य
पुराणीयासनदाने ॥ सुगन्धिचित्राभरणोप

शोभितमस्त्वासनं वेदविदे प्रदद्यात् ॥ ग्रामाधि पत्यं लभते सशीघ्रं कुलेमहत्वं लभते समग्रं ॥ ग्रामस्य जाति परत्वात्तदाधिपत्यं सार्व्वभौमत्व मितिसागर ॥ पूजादिविधाय ॥ अद्यसीघ्र ग्रामाधिपत्यलाभसमग्रकुलप्राप्तिकाम इदं सु गन्धिचित्राभरणोपशोभितासनं प्रजापतिदैव तमित्यादि ॥ दक्षिणास्मर्शान्त ॥ नन्दिपुरा णीयासनदाने ॥ काष्ठपादुकादानानिपीठ कान्यासनानिच । येददन्ति द्विजातिभ्यस्ते धुवं यान्तिवैसुखं ॥ सुवर्णमणिपीठेषु पादौकृ त्वोत्तमेषु च । येप्रयान्तिविमानैस्तु अप्सरो गणमण्डितैः ॥ दातृवहुत्वापेक्षयाबहुवचनं ॥ आसनं भद्रासनं पीठानि पादपीठानि पूजा दिविधाय ॥ अद्यसुखाधुगमनवहूत्तमसुवर्णम णिपीठाधिकरणक पादद्वयतदधिकरणत्व. कनराप्सरोगणमण्डित वहुविमानकरणकगम नकाम इदमासनं प्रजापतिदैवतमित्यादि ॥

दक्षिणास्पर्शान्तं ॥ विष्णुधर्मोत्तरीयासन दाने। तत्रैवासनदाने नस्थानरुर्वेत्रबिन्दति पूजादिविधाय ॥ अद्यसार्वत्रिकस्थानलाभ प्राप्तिकामइदमासन प्रजापति दैवतमित्यादि दक्षिणास्पर्शान्त ॥ ब्रह्मपुराणीयवस्त्रस्त्री तासनदाने ॥ आसनय प्रदद्येत्तु समीतब्रा ह्मणायवै। राजस्थानमवाप्नोति स्वर्गप्राप्नोति निश्चर ॥ समीत वस्त्राच्छादित। पूजादिवि धाय ॥ अद्यविज्वरात्मीय राजस्थानप्राप्ति कामइदवस्त्र समीतासनमुत्तानाङ्गिरोदैव तमित्यादि ॥ दक्षिणास्पर्शान्त ॥ विष्णुध र्मोत्तरीयपादपीठदाने ॥ पादपीठप्रदाने न स्थानंसर्वत्रविन्दति। पूजादिविधाय॥ अद्य सर्वत्रस्थानलाभकाम इदपादपीठप्रजापतिदै वतमित्यादि॥ दक्षिणास्पर्शान्तं॥ ब्रह्मपुराणो पादपीठदाने ॥ पूजादिविधाय ॥ अद्यसुखा युगारूनकामबहूत्तम सुवर्णमणिपीठाधिकरण

